# संस्कृत-वाङ्मय का बृहद् इतिहास

## पञ्चदश-खण्ड
## व्याकरण

प्रधान सम्पादक
पद्मभूषण आचार्य बलदेव उपाध्याय

सम्पादक
प्रो. गोपालदत्त पाण्डेय

उत्तर प्रदेश संस्कृत संस्थान
लखनऊ

# संस्कृत-वाङ्मय का बृहद् इतिहास

पञ्चदश-खण्ड

**व्याकरण**

प्रधान सम्पादक

पद्मभूषण आचार्य बलदेव उपाध्याय

सम्पादक

प्रो. गोपाल दत्त पाण्डेय

उत्तर प्रदेश संस्कृत संस्थान

लखनऊ

# संस्कृत-वाङ्मय का बृहद् इतिहास

पञ्चदश-खण्ड

**व्याकरण**

*प्रधान सम्पादक*

पद्मभूषण आचार्य बलदेव उपाध्याय

सम्पादक

प्रो. गोपाल दत्त पाण्डेय

उत्तर प्रदेश संस्कृत संस्थान

लखनऊ

प्रकाशक :
**डॉ. सच्चिदानन्द पाठक,**
निदेशक :
उत्तर प्रदेश संस्कृत संस्थान, लखनऊ

प्राप्ति स्थान :
**विक्रय विभाग :**
उत्तर प्रदेश संस्कृत संस्थान, नया हैदराबाद,
लखनऊ-२२६ ००७
फोन : ७८०२५१
वेबसाइट : **www.upsanskritsansthanam.org**
ई-मेल : **nidesans@sify.com**

प्रथम संस्करण :
वि.सं. २०५८ (२००१ ई.)
प्रतियाँ : ११००
मूल्य : रु. ३००/- (तीन सौ)


मुद्रक : **शिवम् आर्ट्स,** निशातगंज, लखनऊ। दूरभाष : ७८२३४८, ७८२१७२

# अध्यक्षीयं प्राक्कथनम्

व्याकरणशास्त्रस्य मूलं वेद एव, तथा चाथर्वणे पठ्यते को धातुः किं प्रातिपदिकम् इत्यादि। पुराणेष्वप्याग्नेये कौमारं व्याकरणम्, शिवपुराणेऽपि अइउण् इत्यादि सूत्रं वृद्धिरादैच् इत्यादिसूत्रं स्वाध्याये निर्दिष्टमतः सिद्धं व्याकरणमनादि वर्तते, तथापि तत्र संक्षिप्ततया निर्दिष्टान् विषयानादायाचार्याः विशदी कुर्वन्ति। तत्र जिज्ञास्यते किमिदं व्याकरणम् ? इति

**व्याकरणम्**-व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणम्। वि+आङ् पूर्वक कृधातोः करणे ल्युट् विधानात् व्याकरणशब्दस्य सिद्धिर्भवति। प्रकृतिप्रत्ययादिभिः शब्दस्य व्युत्पत्तिः साधुत्वनिष्पत्तिः येन शास्त्रेण क्रियंते तच्छास्त्रं व्याकरणम्। अथवा असाधुशब्देभ्यः साधुशब्दानां पृथक्करणं वा व्याकरणम्। एकस्य शब्दस्य बहवो अपभ्रंशाः सन्ति। तद्यथा एकस्य गोशब्दस्य गावी, गोणी, गोता, गोपोतलिकेत्यादयो बहवोऽपभ्रंशाः सन्ति। तत्र गच्छतीति गौरिति व्युत्पत्त्या गम्धातोर्डोप्रत्ययविधानात् डित्वसामर्थ्यादभस्यपि टेर्लोपे गोशब्दः साधुर्भवति स एव प्रयोक्तव्यः। इत्थं गावी गोणीत्यादयोऽपभ्रंशाः स्वतोव्यावृत्ता भवन्ति।

अत उक्तं भर्तृहरिणा-
साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः। इति।

**व्याकरणशास्त्रस्याचार्यपरम्परा**

ऋक्तन्त्रप्रातिशाख्ये पठ्यते, "ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रोभरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः तं खल्विममक्षरसमाम्नायमित्याचक्षते" इति। अनया रीत्याऽवगम्यते ब्रह्माऽस्य व्याकरणशास्त्रस्य प्रथम आचार्यः बृहस्पति-द्वितीयः इन्द्रस्तृतीयः भरद्वाजश्चतुर्थः ऋषयः पञ्चमां कोटीमाटीकन्ते।

**अन्ये आचार्याः**
**इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।**
**पाणिन्यमर जैनेन्द्रा जयन्त्यष्टादि शाब्दिकाः।।**

इन्द्रः, चन्द्रः, काशकृत्स्नः, आपिशलिः शाकटायनः, पाणिनिः, अमरः, जैनेन्द्रः इमे अष्टौ शाब्दिकास्तु ख्याताः सन्ति।

पाणिनिसूत्रादपि केषाञ्चिदाचार्याणां (शाब्दिकानां) नामानि ज्ञायन्ते। तथाहि तृषिमृशिकृषेः काश्यपस्य (१/२/२५) सूत्रे काश्यपस्य निर्देशः। अड्गार्ग्यगालवयोः (७/३/९९) इति सूत्रे गार्ग्यगालवयो निर्देशः। ई चाक्रवर्मणस्य (६/१/१३०) सूत्रे चाक्रवर्मणस्य निर्देशः। "ऋतो भारद्वाजस्य" (७/२/६३) सूत्रेभारद्वाजस्य निर्देशः। इकोऽसवर्णेशाकल्यस्य ह्रस्वश्च

(६/१/१२७) इति सूत्रेशाकल्यस्य निर्देशः। गिरेश्च सेनकस्य (५/४/११२) इति सूत्रे सेनकस्य निर्देशः चयोद्वितीयाशरि पौष्करसादेरिति वाच्यम् (८/४/३८) सूत्रे पौष्करसादे निर्देशः। "वष्टिभागुरिरल्लोपो अवाप्यो रुपसर्गयोः। आपं चैव हलन्तानां यथा वाचा निशा दिशा" इत्यत्र भागुरेर्निर्देशः उपलभ्यते।

एवम् 'अवङ्स्फोटायनस्य (६/१/१२३) सूत्रे स्फोटायनस्य निर्देशस्तथा-"अलं खल्वोः प्रतिषेधयोः प्राचांक्त्वा" (३/४/१८) सूत्रे प्राचामितिनिर्देशो लभ्यते अत ज्ञायते पाणिनेः पूर्वं बहूनि व्याकरणान्यासन्।

पाणिनिव्याकरणं परं लुप्तेषु सत्स्वपि बहुषु व्याकरणेषु पाणिनिव्याकरणस्यैव निरतिशयं महत्त्वम्। यतो हि व्याकरणेऽस्मिन् न केवलं लौकिकशब्दानाभपितु वैदिकशब्दानामप्यनुशासनं लभ्यते।

तथाहि भट्टोजि दीक्षितः सिद्धान्तकौमुद्यां वैदिकस्वरप्रकरणान्ते प्राह-

**"इत्थं वैदिक शब्दानां दिङ्मात्रमिह दर्शितम्।**
**तदस्तुप्रीतये श्रीमद्भवानीविश्वनाथयोः।। इति।"**
**विद्वद्भिः प्रशंसितमपि-**
**पाणिनीय महाशास्त्रं सर्वशास्त्रोपकारकम्।**
**कुत्रचित् 'पाणिनीयं कणादं च इति पाठो लभ्यते।**

'मुखं व्याकरणं स्मृतम्' इत्युक्तेः प्रधानमङ्गं, व्याकरणम्। अतः प्रधानं च षट्स्वङ्गेषु व्याकरणम् इति महाभाष्योक्तेः। पाणिनीयव्याकरणे कात्यायनेन वार्तिकानि निर्मितानि शेषावतारेण महर्षिणा पतञ्जलिना महाभाष्यं सुललितभाषया निबद्धमत इदं त्रिमुनि व्याकरणं सम्पन्नम्।

महाभाष्यात् शब्दकौस्तुभ उद्धृतो भट्टोजिदीक्षितेन, तमाधारीकृत्य कौण्डभट्टेन वैयाकरण भूषणसारो निर्मितः, व्याकरणसिद्धान्तरत्नानां रक्षणाय नागशभट्टविदुषा वैयाकरणसिद्धान्त मञ्जूषा लघुमञ्जूषा च विरचिते, भर्तृहरिश्च "वाक्यपदीयम्" निर्मितवान, श्रूयते व्याडिकृतो लक्षश्लोकात्मकः संग्रहग्रन्थोऽप्यासीत् साम्प्रतं लुप्तः।

कथं न भवेदस्य व्याकरणस्यमहती प्रतिष्ठा। यतो हि महर्षिः पाणिनि सुचिरं तपस्तप्त्वा प्रीतेन भगवता सर्वासांविद्यानामीशानेन नटराजेन-"अक्षर समाम्नायमवाप्तवान्। नृत्यावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्। उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शे शिव सूत्रजालम्। इति।"

अष्टाध्याय्यां प्रोक्तानां सूत्राणां प्राचीनैर्हरदत्तवामनादिभिः वृत्तयोरचिताः। अन्येऽपि वृत्तिकारा अभूवन् परं सिद्धान्तकौमुदी विद्वद्भिसमादृता, सिद्धान्तकौमुद्याः व्याख्याऽपि भट्टोजिदीक्षितेन प्रौढमनोरमाख्या रचिता हरिदीक्षितेन प्रौढमनोरमायां शब्दरत्ननामकं व्याख्यानं कृतम्। नागोजिभट्टेन च लघुशब्देन्दुशेखरो ग्रन्थो रचितः। लोकन्यायसिद्धाः वाचनिकीः

ज्ञापकसिद्धाश्च परिभाषाः संकलय्य परिभाषेन्दुशेखरो ग्रन्थो निर्मितः। व्याकरणमहाभाष्योपरि कैय्यटकृताप्रदीपटीका तदुपरि नागेशभट्टकृता उद्योत टीका विद्योततेतराम्। महाभाष्येणास्मिन् व्याकरणेऽति प्रौढिः समायाता। तथा महाभाष्यभाष्यकारः 'अथ शब्दानुशासनम्' इत्यत्राशंकते केषां शब्दानाम्, समाधत्ते च लौकिकानां वैदिकानां च। कस्तर्हि शब्दः? येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवतिसशब्दः। अथवा प्रतीत पदार्थकोलोकेध्वनिः शब्द इत्युच्यते। प्रतीतः पदार्थो येन स ध्वनिः शब्द इत्युच्यते इममेव ध्वनिशब्दं वस्तुतोध्वनिनाऽभिव्यक्तं ध्वनिं गृहीत्वा व्यङ्ग्यव्यञ्जकमखस्थले ध्वनिर्भवतीति सिद्धान्ततः प्रेरणां प्राप्यानन्दवर्धनाचार्यो ध्वनिसिद्धान्तं स्थापितवान् 'काव्यस्यात्माध्वनिरिति बुधैः यः समान्मात पूर्वः' इति।

कानि पुनः शब्दानुशासनस्य प्रयोजनानि, इति प्रश्ने रक्षोहागमलघ्वसन्देहाः प्रयोजनम् इत्याह। तत्रागमः खल्वपिब्राह्णेन निष्कारणो धर्मः षडङो वेदोऽध्येयो ज्ञेयश्च। प्रधानं च षडङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति।

पुनः प्रश्नः शब्दस्य ज्ञाने धर्मः उत्प्रयोगे। उत्तरितं च ज्ञानपूर्वके शब्दप्रयोगे धर्मः। तथा हि श्रुतिः एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गेलोके च कामधुग्भवति।। इति। व्याकरणं च न केवलं सूत्रं नवा केवलं शब्दोऽपितु लक्ष्यलक्षणे व्याकरणम् इति शब्दानित्याः सन्ति, तेषां शब्दानां साधुत्वप्रतिपादनं व्याकरणेन क्रियते। सिद्धे शब्दार्थसम्बन्धे इत्यत्र, शब्दोनित्यः अर्थोऽपिनित्यः तयोः सम्बन्धोऽपिनित्य इति सिद्धान्तितम्।

व्याकरणस्य महत्त्वं प्रतिपादयति वाक्यपदीयम्

**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।**
**तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते।।**
**तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।**
**पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते।।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः।। इति च।**

एवं प्रकारेण महत्त्वपूर्णस्यास्य विषयस्य सम्यग् विवेचनमत्र ग्रन्थेऽधिकारिविद्वद्भिः कृतमिति महानामोदस्य विषयः विस्तृतस्य व्याकरणस्य व्याख्यानमेकेन केनापि विदुषा कर्तुमशक्यमेव विद्यते, कालप्रभावात्। परञ्च प्रधानसम्पादकेन पद्मभूषणेन पण्डितप्रवर बलदेवोपाध्यायेन सुचिन्तनं कृत्वा पण्डितगोपालदत्तपाण्डेयमहोदयस्य सम्पादकत्वेन विनियोजनं कार्यस्य सम्पादनं महत्वपूर्णमासीत्। यद्यपि श्री गोपाल दत्त पाण्डेयः शासकीयपदेषु आजीवनं कार्यं कृतवान् तथापि व्याकरणशास्त्रस्याध्ययनं तथा लेखने सिद्धता सुप्रमाणिता विद्यते। अन्तिमे वयसि विद्यमानोऽपि विद्वन्मूर्धन्योऽयं बहुपरिश्रमेणास्य व्याकरणखण्डस्य सम्पादने अभिरुचिं प्रदर्शितवान्। तस्यैवपरिश्रमस्येदं फलं व्याकरणखण्डम्।

अत्र ते सर्वेऽपि लेखकाः भृशमभिनन्दनीयाः सन्ति यैः मनोयोगेन विविधविषयेषु निबन्धाः दत्ताः। प्रो. गोपाल दत्त पाण्डेयः, डॉ. जानकी प्रसाद द्विवेदी, प्रो. दयानन्द भार्गवः, आचार्य रामाधीन चतुर्वेदी इत्यादयो विद्वांसः स्वकीयैः पाण्डित्यपूर्णलेखैः ग्रन्थं विभूषितवन्तः सन्ति, एतदर्थमहं स्वकीयं हार्दिकं कार्तज्ञ्यं ज्ञापयामि। डा. धनीन्द्रकुमार झा महोदयः केन्द्रीयसंस्कृत-विद्यापीठे लक्ष्मणपुरे व्याकरणशास्त्रस्य लब्धप्रतिष्ठिः प्राध्यापको विद्यते। अस्य व्याकरणपाटवमहमस्याध्ययनकालादेव विजानामि। प्रस्तुतस्यास्य व्याकरणखण्डस्य प्रकाशने, परिष्करणे, शब्दसूच्यादिसंशोधने चानेन सुप्रसिद्धवैयाकरणेन महती सारस्वती सेवा समर्पिता। डा. झा-महोदयस्य बुद्धिवैलक्षण्यं प्रातिभं ज्ञानञ्च शास्त्राणां परिशीलने संवर्धने च सुसमर्थं विद्यतेऽत्र नास्ति सन्देहावसरः। संस्थानपक्षतोऽहमस्य समुज्ज्वलभविष्यपथिसमुन्नतये शुभाशीर्वचोभिः भृशं वर्धापयामि, परिश्रमार्थञ्च हार्दिकीं शुभकामनां प्रकटीकरोमि। पुनश्चास्य व्याकरण खण्डस्य सम्यक् प्रकाशनार्थं संस्थानस्य निदेशको डॉ. सच्चिदानन्दपाठक महोदयो नूनं धन्यवादार्हः यः सद्यः प्रकाशनार्थं प्रेरितवान्। संस्थानस्य सहायकनिदेशकः डॉ. चन्द्रकान्त द्विवेदी महोदयः ग्रस्थस्यास्य प्रकाशने सर्वतो भावेन कार्यं सम्पाद्य पूर्त्यर्थं प्रयत्नं कृतवानेतदर्थं मम अस्य समुन्नत्यै हार्दिकी शुभकामना विद्यते। संस्थानस्यान्येऽपि कर्मचारिणः तत्परतया सम्पादने आवश्यकं कर्तव्यं पालितवन्तः, तदर्थं तेऽपि साधुवादार्हाः सन्ति। सम्यक् मुद्रणार्थं "शिवम् आर्ट" मुद्रणालयस्याधिपतयः कर्मचारिणश्च भृशं धन्यवादार्हाः इति शम्।

विदुषां वशंवदः
नागेन्द्र पाण्डेयः

# निवेदन

व्याकरण शास्त्र का मूल वेद ही है। इसी क्रम में तन्त्रों एवं पुराणों में भी व्याकरण को सूत्र रूप में निर्दिष्ट किया गया है, जिनकी विशद व्याख्या सुव्यवस्थित रूप में परवर्ती व्याकरणाचार्यों द्वारा की गयी है।

......व्याकरण शब्द का व्युत्पत्ति मूलक अर्थ है जिस शास्त्र के माध्यम से शब्दों की व्याकृति या व्युत्पत्ति की जाय (वि+आङ्+ कृ-करणे +ल्युट्)।

इस प्रकार प्रकृति, प्रत्यय आदि के माध्यम से जिस शास्त्र के द्वारा शब्दों की व्युत्पत्ति की जाय अथवा साधुत्व की निष्पत्ति (सिद्धि) की जाय, उसे व्याकरण कहते हैं। व्याकरण शब्दों के प्रयोग, अनुप्रयोग एवं संश्लेषण के साथ साथ विश्लेषण भी करता है। इसके माध्यम से ही शुद्ध शब्दों का अशुद्ध शब्दों से पार्थक्य किया जाना संभव है। इसलिये शब्दों के संस्कार के लिये व्याकरण का पढ़ना अनिवार्य बताया गया है :-

**यद्यपि बहुनाधीषे तथापि पठ पुत्र! व्याकरणम्।**
**स्वजनः श्वजनो माऽभूत्सकलः शकलः सकृच्छकृत् ।।**

भाषा के प्रवाह में एक शब्द के अनेक अपभ्रंश हो जाते हैं। जैसे अकेले "गो" शब्द का गावी, गोणी, गोता, गोपोतलिका जैसे अपभ्रंश हैं, किन्तु गम् (गच्छ जाने के अर्थ में) धातु से डी प्रत्यय लगने के विधान (व्याकरण के नियमों) से "गो" शब्द ही शुद्ध माना जाता है। शेष गावी गोणी आदि अपने आप निराकृत हो जाते हैं।

इस प्रकार व्याकरण का एक सबसे महत्वपूर्ण प्रयोजन यह है कि यह प्रयोग किये जाने वाले शब्दों के स्वरूप का निर्धारण करे, जिससे उसकी निरन्तरता और पहचान बनी रहे अन्यथा कालक्रम के प्रभाव से लम्बे समयान्तराल के बाद प्रयुक्त शब्दों का अर्थ निकालना भी सम्भव नहीं होगा, इससे भाषा के मुख्य प्रयोजन का ही व्याघात हो जायेगा और संवादहीनता की स्थिति उत्पन्न हो जायेगी। अतः भाषा के संवादशीलता जैसे पुनीत उद्देश्य के संरक्षण के लिये व्याकरणशास्त्र एक अनिवार्यता है।

**व्याकरण शास्त्र की प्राचीन परम्परा**-शब्द ब्रह्म है, तो अर्थ उसकी शक्ति। नाद के माध्यम से सृष्टि की व्याकृति के क्रम में वाणी के विभिन्न रूपों में अर्थान्वयता से ही सृष्टि के नियति स्वरूप की सार्थकता है इसलिये श्रुति (वेदों) के अर्थानुसंधान के लिये प्रातिशाख्यों का अपना ही महत्त्व है। इस प्रकार वेदों के साथ ही व्याकरण का महत्व जुड़ा हुआ है। सृष्टि रचना के साथ शब्दानुवर्ती व्याकरण का प्रणयन स्वयं ब्रह्मा से माना गया है।

इस संबंध में ऋक्तन्त्र प्रातिशाख्य में जैसा कि उल्लिखित है- अक्षरसमाम्नाय ब्रह्मा से बृहस्पति, बृहस्पति से इन्द्र को और इन्द्र से भरद्वाज को, भरद्वाज से अन्य ऋषियों को और ऋषियों से ब्राह्मणों को प्राप्त हुआ।

व्याकरण शब्द शास्त्र से जुड़े अन्य शब्द शास्त्री (शाब्दिक) इन्द्र, चन्द्र, काशकृत्स्न आपिशलि, शाकटायन, पाणिनि, जैनेन्द्र का मुख्य रूप से उल्लेख प्रवर्तक आचार्यों के रूप में किया गया है। महर्षि पाणिनि ने भी अपने अष्टाध्यायी में अनेक ऐसे कतिपय विद्वानों का संदर्भ दिया है-

| | | | | | |
|---|---|---|---|---|---|
| १. | आपिशलि | (सूत्र ६.१.९२) | २. | काश्यप | (सूत्र १.२.२५) |
| ३. | गार्ग्य | (सूत्र ७.३.९९) | ४. | गालव | (सूत्र ८.४.६७) |
| ५. | चाक्रवर्मण | (सूत्र ६.१.१३०) | ६. | भारद्वाज | (सूत्र ७.२.६३) |
| ७. | शाकटायन | (सूत्र ८.३.१८) | ८. | शाकल्य | (सूत्र ६.१.१२७) |
| ९. | सेनक | (सूत्र ५.४.११२) | १०. | स्फोटायन | (सूत्र ६.१.१२३) |
| ११. | पौष्करसादि | (सूत्र ८.४.३८) | | | |

इस प्रकार पाणिनि के समय में ही वैदिक व्याकरण के क्रम में भाषा विकास को व्यवस्थित करने के लिये वैयाकरणों के दो सम्प्रदाय थे-१-प्राक् २-उदक्। इस प्रकार संस्कृत भाषा अनेक व्याकरणों के मत मतान्तरों के अन्तर्गत अनेक स्वरूपों में बिखर रही थी। अतः पाणिनि के जिम्मे जो सबसे बड़ा महत्वपूर्ण कार्य था भाषा के स्वरूप को निर्धारित करने वाले इन शब्द-विश्लेषणों का संश्लेषण।

हम सभी जानते हैं कि विश्लेषण मस्तिष्क से होता है, संश्लेषण हृदय से और हृदय से किसी संश्लिष्ट तत्व के उद्गम के लिये अन्तः प्रेरणा की आवश्यकता होती है।

कहते हैं कि यह अन्तः प्रेरणा मन्त्र-सूत्रों के रूप में पाणिनि के हृदय में जहां से उतरी, वह मूल स्रोत थे-स्वयं शिव या महेश्वर और इसी प्रेरणा के उद्भाव ने पाणिनि को संस्कृत व्याकरण का पर्याय बना दिया। वास्तव में अष्टाध्यायी के माध्यम से तन्त्रशास्त्र के मन्त्र बीजों की व्याख्या प्रस्फुटित हुई है। जब वह 'विसर्जनीयस्य सः' जैसे सूत्रों का प्रयोग करते हैं, तो बिन्दु से विसर्ग की अभिव्यक्ति का क्रम परोक्ष की भूमिका के रूप में झलकने लगता है। यह प्रणव (ॐ) से सृष्टि की उत्पत्ति के क्रम को स्पष्ट रूप से द्योतित करता है।

पाणिनि का व्याकरण लौकिक एवं वैदिक शब्दशास्त्रों का समीकरण है। यह केवल शब्दानुशासन ही नहीं, बल्कि निसर्ग एवं जीवन का अर्थानुशासन भी है जिसने 'संस्कृत' को

संस्कृत भाषा का रूप दिया। शिवशक्ति के शब्दार्थ के अन्वित स्वरूप की व्युत्पत्ति पाणिनि की अष्टाध्यायी में ही है, जिसमें वैदिक स्वर प्रकरण को भी संकेत भाव से अनुशासित किया गया है, जैसा कि भट्टोजि दीक्षित की 'सिद्धान्तकौमुदी' में उल्लिखित है।

व्याकरण को वेद का मुख माना गया है। वेद के ६ प्रमुख अंग हैं-शिक्षा २. व्याकरण ३. निरूक्त ४. ज्योतिष ५.छन्द, ६. कल्प। इनमें व्याकरण ही सर्वप्रधान है। वास्तव में पाणिनि के व्याकरण की सम्पूर्ति कात्यायन के वार्तिक और महर्षि पतञ्जलि के महाभाष्य से होती है और इन्हीं तीनों मुनियों की त्रिधा शक्तियों से समग्र व्याकरण की रचना सम्पन्न हुई।

इस प्रकार वैदिक साहित्य के शब्दों के अन्वाख्यान के लिये प्रातिशाख्य, उनकी निष्पत्ति के लिये निरुक्त तथा उच्चारण संबंधी नियमों के लिये शिक्षा का क्रम बनाये रखते हुये भाषा के प्रवाह एवं फैलाव को अनुशासित करने के लिये पाणिनि के पूर्ववर्ती वैयाकरणों ने जहां अपनी उपयोगी भूमिका निभायी वहीं भाषा की स्वच्छ प्रवहमाण सरिता के नागरिक सुसंस्कृत तथा स्थायी उपयोग के लिये उपरोक्त मुनित्रयी ने व्याकरण को वैज्ञानिक स्वरूप प्रदान करते हुये पूर्वापर संबंध स्थापित करने के उद्देश्य से तथा नागरिकों के उपयोगार्थ एक सरल किन्तु सुव्यवस्थित कुलिका का रूप प्रदान किया।

वस्तुतः कात्यायन के वार्तिक पाणिनि सूत्रों के उद्घोषक भी हैं, पूरक भी। पतञ्जलि से पूर्व व्याडि कुर्णि आदि आचार्यों के व्याख्यानग्रन्थ की चरमपरिणिति पतञ्जलि के महाभाष्य द्वारा अभिव्यक्त "शब्दानुशासन" से हुई, जिसे व्याकरण के क्षेत्र में आज भी चिरस्थायी मान्यता प्राप्त हैं। इसी महाभाष्य से भट्टोजि दीक्षित ने "शब्दकौस्तुभ" तथा कौण्डभट्ट ने 'व्याकरणभूषणसार' निर्मित किया जब कि व्याडिकृत एक लाख श्लोकों का संग्रह ग्रन्थ अनुप्रयोगाभाव में आज लुप्तप्राय है। पाणिनि के द्वारा प्रवर्तित इसी मुनित्रयी परम्परा में सर्वप्रथम सूत्रक्रमानुसार व्याख्या वामन तथा जयादित्य द्वारा रचित "काशिका" वृत्ति है। जिनका विशेष विवरण वर्तमान सम्पादक द्वारा लिखित प्रस्तावना में देखा जा सकता है।

यदि सच पूछा जाय तो पाणिनि की समस्त अष्टाध्यायी एक चरमोत्कर्ष प्राप्त ऋषि की तपःपूत उपलब्धि है, जिसका उद्घोष भगवान शिव के महेश्वर सूत्रों से हुआ। इन्हीं सूत्रों के जाल में पूरी अष्टाध्यायी तथा पाणिनि की परम्परा सुव्यवस्थित रूप से पिरोई हुयी है। इस प्रकार पाणिनि का आर्विभाव अक्षरब्रह्म के दृष्टा के रूप में एक महर्षि के रूप में हुआ, जिनका व्याकरण एक वैज्ञानिक शब्दानुशासन मात्र नहीं, अपितु अध्यात्म दर्शन एवं भाषा-विज्ञान का चमत्कारिक समन्वय है।

प्रस्तुत ग्रन्थ में व्याकरण-जगत् में पाणिनि जैसे प्रकाशमान सूर्य के साथ-साथ संस्कृत वाङ्मय के पूरे व्याकरण को आच्छादित करने का प्रयास किया गया है। इस प्रयास को सफलता के लक्ष्य के रूप में प्राप्त कराने वाले सूत्रधार हैं, प्रो. गोपाल दत्त पाण्डेय जो इस खंड के सम्पादक हैं और यशः शरीर से विद्यमान आदि संपादक पं. बलदेव उपाध्याय जी से अनुप्राणित हैं, जिनकी प्रेरणा पूरे ग्रन्थ में सूत्र के रूप में पिरोयी हुयी है।

संस्थान की ओर से तथा अपनी ओर से मैं प्रो. गोपाल दत्त पाण्डेय का अत्यन्त आभारी हूँ जिन्होंने आदि प्रधान संपादक पं. बलदेव उपाध्याय की प्रेरणा से इस ग्रन्थ के रूप में साकार करने में महती भूमिका निभायी है। उन्होंने अपनी विद्वतापूर्ण भूमिका के साथ-साथ वैदिक परम्परा से व्याकरण से जुड़े महर्षियों, ग्रन्थकारों तथा उक्त क्रम में पाणिनि के द्वारा उल्लिखित पूर्व वैयाकरणों तथा अनुल्लिखित वैयाकरणों का प्रचुर रूप में परिचय दिया है। इसी क्रम में उन्होंने पाणिनि परम्परा से जुड़े स्वयं महर्षि पाणिनि, कात्यायन तथा पतञ्जलि के परिचय के साथ-साथ अष्टाध्यायी, वार्तिक एवं महाभाष्य से जुड़े प्रसंगों ग्रन्थों का सटीक विवेचन किया है तथा उन्हें पूर्वापर अनुक्रम में प्रस्तुति कौशल के माध्यम से अभिव्यक्ति प्रदान किया है।

अष्टाध्यायी के वृत्तिकार तथा शब्दकौस्तुभ एवं वैयाकरण सिद्धान्तनिधि पर ऐतिहासिक दृष्टि से एवं विशेषतापरक व्याख्या समग्र विश्लेषण के साथ डा. जानकी प्रसाद द्विवेदी, आचार्य एवं अध्यक्ष, तिब्बती उच्च शिक्षण संस्थान, वाराणसी, डा. दयानन्द भार्गव, आचार्य एवं अध्यक्ष डा. सत्यप्रकाश दूबे, संस्कृत विभाग जोधपुर विश्वविद्यालय, जोधपुर द्वारा प्रस्तुत की गयी है। उनकी इस विद्वतापूर्ण प्रस्तुति के लिए मैं हृदय से आभारी हूँ।

इसी क्रम में प्रक्रिया ग्रन्थ एवं व्याख्या सम्पत्ति के अन्तर्गत ऐतिहासिक परिप्रेक्ष्य को लेते हुए प्रौढ़मनोरमा, नागेश (नागोजी) भट्ट के कृतित्व का व्याख्यात्मक विवरण दिया गया है। नागेशभट्ट कृत 'लघु-मञ्जूषा' तथा 'शब्देन्दुशेखर' को क्रमशः सन्तति के स्थान पर पुत्री एवं पुत्र के रूप में उनके द्वारा भगवान शिव को अर्पित किया गया और इसे इनके शिव पार्वती की उपासना का फल भी माना जाता है। इस प्रकरण में वर्तमान संपादक के साथ श्री जानकी प्रसाद द्विवेदी, श्री द्वारिकाप्रसाद शास्त्री, श्री नरहरि शास्त्री धत्ते का योगदान उल्लेखनीय है। इन सभी के हम हृदय से आभारी हैं।

संस्कृत का व्याकरण सूत्रात्मक होने के साथ-साथ वैज्ञानिक भी है और इससे पाश्चात्य जगत चमत्कारिक रूप में प्रभावित हुआ। विशेषकर पाणिनि के व्याकरण से भारत की प्रतिष्ठा विशेषरूप से विदेशों में बनी है। इस प्रसंग में भी इस ग्रन्थ में संगति संदर्भों का समावेश किया गया है।

जैसा कि पहले ही विवेचित किया जा चुका है कि संस्कृत का व्याकरण आध्यात्मिक और दार्शनिक दृष्टि से कम महत्वपूर्ण नहीं है। 'प्रकृति' और 'प्रत्यय' के समावेश से शब्दात्मक ब्रह्म की उपलब्धि दार्शनिक प्रक्रिया का ही एक अंग है। यह संबंध 'प्रकृति' और 'पुरुष' के संबंध के समान नित्य है। 'सुप्' 'तिङ' प्रत्यय से युक्त होने पर ही प्रकृति पद रूप से परिणित होती है। वस्तुतः केवल प्रकृति या प्रत्यय का उपयोग संभव नहीं है। भर्तृहरि का 'वाक्यपदीय' वस्तुतः व्याकरण की दार्शनिक व्याख्या का ही प्रतिफल है।

**इदमाद्यं पदस्थानं सिद्धि सोपानपर्वणाम्।**
**इयं सा मोक्षमार्णानामजिह्मा राजपद्धतिः।।**

सांख्य दर्शन के अतिरिक्त तन्त्रागम के बीजाक्षर एवं बिन्दु और नाद से सृष्टि की नैसर्गिकी स्फुरता प्रकट है। माहेश्वर सूत्र के अ से लेकर ह तक 'अहम्' सम्पूर्ण विश्व के प्रकट रूप को समाहित करता है ताकि प्रथम अक्षर 'अ' से शिव और 'ह' से शक्ति का बोध होता है। जो मूल प्रकृति की अभिव्यक्ति करता है। दर्शन के विवर्त सिद्धान्त, सम्बुद्धि तत्व, स्फोटतत्त्व, आदि का विधिवत् प्रतिपादन सूत्रों के रूप में व्याकरण परम्परा में है। इसका विवेचन तथा शाब्द बोध विमर्श के अन्तर्गत किया गया है। इस प्रसंग में दार्शनिक स्वरूप को संकेत रूप में रखने के लिये हम डा. रामाधीन चतुर्वेदी पूर्व व्याकरण विभागाध्यक्ष, काशी हिन्दू विश्वविद्यालय, वाराणसी के एवं परम्परा के लिये संपादक एवं श्री जगन्नाथ शास्त्री योगतन्त्र विभाग, वाराणसी के आभारी हैं।

पाणिनि की परम्परा से अलग भी व्याकरण का प्रचार प्रसार रहा है। पालि तथा प्राकृत भाषाओं से भी संस्कृत व्याकरण का गहरा एवं अभिन्न संबंध है। परिशिष्ट के रूप में पाणिनि ग्रन्थों के साथ-साथ लक्ष्यप्रधान काव्यशास्त्र तक पाणिनेतर व्याकरण के पक्ष को भी प्रस्तुत ग्रन्थ में समाविष्ट किया गया है। इसके लिये संपादक के साथ-साथ डा. जानकी प्रसाद द्विवेदी का हृदय से विशेष रूप से आभार प्रकट करते हैं। जिन्होंने ऐसे विषय पर अपना अभिमत व्याख्या सहित रखा है।

हमारा प्रयास रहा है कि वाङ्मय के प्रधान संपादक पं. बलदेव उपाध्याय की प्रेरणानुसार सभी पहलुओं को उनके ऐतिहासिक परिप्रेक्ष्य तथा विश्लेषणात्मक रूप समाहित किया जाय। यह प्रयास कितना सफल रहा है इसके प्रमाण तो विद्वद्वृन्द और जिज्ञासु ही हो सकते हैं जो इसका अध्ययन करेंगे।

केन्द्रीय संस्कृत संस्थान, लखनऊ के विद्वान प्राध्यापक डॉ. धनीन्द्र कुमार झा के हम हृदय से आभारी हैं जिन्होंने अपनी ज्ञानमञ्जूषा से इसे शुद्ध रूप में अभिव्यक्ति देने में

अपना अमूल्य समय और सहयोग दिया है। इसके प्रकाशन, परिष्करण, शब्दसूची निर्माण में इन्होंने जिस प्रतिभा और कौशल का योगदान दिया है इसके लिये आभार प्रदर्शन मात्र पर्याप्त नहीं है।

इस खंड के समय से प्रकाशित होने में निरन्तर शक्ति के रूप में अपने अमूल्य समय तथा वैयक्तिक सुविधा को संस्थान के हित में समर्पित करने वाले विद्वान् अध्यक्ष डा. नागेन्द्र पाण्डेय की सत्प्रेरणा के प्रति संस्थान सदैव आभारी रहेगा। संस्थान के सहायक निदेशक डा. चन्द्रकान्त द्विवेदी तथा संस्थान के अन्य सहयोगी को इस ग्रन्थ के समय से पूर्ण करने के निमित्त बनने के लिये मैं साधुवाद देता हूँ और मुद्रण की शुद्धता और नैरन्तर्य बनाये रखने के लिये शिवम् आर्ट प्रेस के जुड़े सभी लोगों को धन्यवाद देता हूँ।

हम सभी अन्त में परमपिता परमेश्वर को हृदय से नमन करते हुए शिवत्व प्राप्त आदि संपादक पं. बलदेव उपाध्याय के प्रति अपनी अगाध श्रद्धा अर्पित करते हैं जिनकी प्रेरणा से वाङ्मय के इतिहास की यह महत्त्वपूर्ण कड़ी सम्पन्न हुयी।

विनयावत

नागपञ्चमी (श्रावण शु. ५) सं. २०५६

**डा. सच्चिदानन्द पाठक**

निदेशक

# आमुखम्

नैतावत् परोक्षं प्रेक्षावतां यद् वेदार्थप्रतिपादकेषु सुप्रसिद्धेषु षट्सु वेदाङ्गेषु प्रधानं व्याकरणमेवेति। तथा हि प्रधाने च कृतो यत्नः फलवान् भवति। अतः शब्दसाधुत्वप्रतिपादनपरा व्याकरणस्मृतिः लोके सुप्रसिद्धा जाता। तथा चाह भर्तृहरिः-"शब्दसाधुत्वविषया सैषा व्याकरणस्मृतिः"। वर्तमाने अस्याः स्मृतेः प्रथमः प्रवक्ता महर्षिः पाणिनिः शब्दशास्त्रकुलगुरुतां भजते। यद्यपि पाणिनेः पूर्वम् अनेके वैयाकरणा बभूवुः परं तेषां ग्रन्थाः साकल्येन नोपलभ्यन्ते। यत्र-तत्र विविधेषु ग्रन्थेषु तेषाम् उद्धरणानि अवलोक्यन्ते। अतएव तेषां विद्यमानत्वे न कोऽपि सन्देहः पूर्वेषामप्याचार्याणां कृतयः सूत्ररूप एव निबद्धा एवाऽऽसन्। परम्परानुसारम् अनेन कुलगुरुणा पाणिनिना च सैषा व्याकरणस्मृतिः सूत्रेषूपनिबद्धा। तानि च सूत्राणि अष्टभिरध्यायैर्गुम्फितत्वाद् 'अष्टाध्यायी' ति नाम्ना व्यवह्रियते। अस्यामष्टाध्याय्यां लौकिक वैदिकोभयविध-शब्दप्रक्रिया-विलासो विलसति। अनेन लोकवेदोभयमार्गेण सञ्चरमाणः स एष पाणिनिमुनिः अक्षरसमाम्नायादारभ्य शब्दसिद्धिप्रतिपादनपरं विलक्षणं तन्त्रं प्रणिनाय यस्मिन् पथि पाणिनेः प्राक् कोऽप्याचार्यः न सञ्चचार। इदमेव पाणिनिव्याकरणस्य व्याकरणान्तरेभ्यो वैशिष्ट्यम्। अतो वैशिष्ट्यविरहादेव प्राक्तनानि व्याकरणान्तराणि सहजमत्या विस्मृतिपथं गतानि। विलसति च लोकवेदोभयशब्दानुशासनपरत्वात् पाणिनीयं तन्त्रमेव निखिलव्याकरण-राशिशिरोरत्नायमानमिति।

भगवतः पाणिनेः स्वोपज्ञत्वविषये भगवान् पतञ्जलिरेवमाह -"सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्" इति। किं बहुना पाणिनेः सूक्ष्मेक्षिकां दृष्ट्वा तस्य गौरवातिशयो महता कण्ठेन समादरेण च समुद्घोषितः। तथैव चावधारितं यत् पाणिन्युपज्ञं व्याकरणं मानवप्रतिभायां महनीयं विचित्रं चाविष्करणमिति।

पाणिनीसूत्राणामर्थं विशदीकर्तुं प्राचीनकालादेव बहवो वृत्तिकाराः प्रयतनपरा अभूवन्। तेषु व्याडिकुणि-प्रभृतिभिराचार्यैर्गुम्फिता वृत्तयः सुप्रसिद्धा आसन्, किन्तु ताः सम्प्रति न समुपलभ्यन्ते। किञ्चित्कालानन्तरं पाणिनेः सूत्राणि कात्यायनस्य वार्तिकानि च व्याचिख्यासुः शेषावतारो भगवान् पतञ्जलिः महाभाष्याख्यं ग्रन्थरत्नं प्रणिनाय। महाभाष्यविरचनानन्तरं पाणिन्युपज्ञं व्याकरणं सर्वाङ्गपूर्णं समभवत्। तस्य भासाभासमाना सर्वा लक्ष्यसिद्धिर्निर्दोषा सञ्जाता। तदेवं सूत्रानुसारिव्याख्यानमनुसृत्य व्याकरणाध्ययनाध्यापनरीतिर्विद्वद्भिरनुमोदिता प्रख्यापिता च। कालक्रमेण सूत्रानुसारिणी प्रक्रिया शनैः शनैः शैथिल्यमभजत। कालप्रभावादेव व्याकरणाध्यापने क्लेशमनुभवन्तो विद्वांसः कार्यकालपक्षाङ्गीकार एव छात्राणामभिरुचिं पश्यन्तो लक्ष्यसाधनात्मिकां सरणिमनुसृत्य प्रक्रियाग्रन्थान् व्यरचयन्। अस्य प्रभावेण नूतनप्रक्रियाग्रन्थानां प्रचारः समभवत्। नूतनप्रक्रियाग्रन्थकारेषु भट्टोजिदीक्षितः सर्वाग्रणीर्बभूव। तेन विरचिता "सिद्धान्तकौमुदी" सुप्रसिद्धा जाता। अन्ये "प्रक्रियासर्वस्व"-प्रभृतयो ग्रन्था अध्यापने प्रचलिता नाभवन्। काशिकाप्रभृतीनांतु का कथा ? भट्टोजिदीक्षितस्यापरोग्रन्थः शब्दकौस्तुभस्तु सूत्रक्रमानुसारी

एव। अतएव भट्टोजिदीक्षितः सूत्रक्रमानुसारिव्याख्यानमपि स्वीकरोति। सिद्धान्तकौमुद्या अन्ते भट्टोजिदीक्षित एवमाह-

'इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम्' इति। अग्रे स एव इत्थं वदति-'विस्तरस्तु यथाशास्त्रं द्रष्टव्यं शब्दकौस्तुभे' इति।

दीक्षितानन्तरं व्याकरणाध्यापनप्रणाली नवीनतामभजत। सा खलु ''नव्यव्याकरणमिति नाम्ना सुविदिता' तत्र नवीनत्वं पदपदार्थयोर्विचारो भाषाया वैशिष्ट्येन वैलक्षण्यं जनयति तच्च नव्यन्यायानुप्राणितकलिताया भाषायाः प्रभावेण संवृत्तम्। परिष्कारपद्धत्याः सुविदितेषु विज्ञेषु विश्वेश्वर-नागेश-दण्डी-पायगुण्डे-बालशास्त्रि-प्रभृतयोऽनेके विद्वांसः समभूवन्। सैषापद्धतिरद्यत्वे शिथिलत्वं भजते, परिश्रमजन्यत्वात्। केवलं पारिभाषिकशब्दानां सिद्धान्तस्वरूपेणैव अध्येतारः परिष्काराणां पर्यवसानमेव भजन्ते।

लक्ष्य-लक्षणात्मकस्य व्याकरणस्य प्रयोजनं केवलं शब्दानुशासनमेव नासीदपि च शब्दस्य वास्तविकस्वरूपावबोधनमपि आवश्यकमासीत्। इत्थं च शब्दस्य शास्त्रत्वं, विज्ञानत्वं, दार्शनिकत्वं चेति त्रीणि रूपाणि त्रयीवत् प्रामाण्यकोटौ निवेशितानि। भर्तृहरिणा वाक्यपदीयस्य प्रारम्भ एव शब्दब्रह्मणः स्वरूपं प्रतिपादितम्। अग्रे च ध्वनितत्त्वस्य प्रतिपादनेन सहैव स्फोटस्य च निरूपणं कृतं-''ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते। अल्पो महांश्च केषाञ्चिदुभयं तत् स्वभावतः'' ध्वनेश्च नित्यत्वमधुना वैज्ञानिकैः आकाशवाण्यादि माध्यमेनापि दर्शितम्। स्फोटरूपेण च शब्दस्य अक्षरत्वं विज्ञापितम् अध्यापनविषये च नूतना प्रणाली काव्यस्य माध्यमेन अनेकैः कविभिः काव्यानि विरचयन्तो ह्याविष्कृता। भट्टिकाव्यादीनां प्रणेतारो महाकवयो व्याकरणाध्ययनमार्गं सरलमकुर्वन्। अनेन पथा विचरन्तस्छात्राः काठिन्यं न भजन्ते। अधुनापि अध्ययनाध्यापनं काव्यशास्त्रमाध्यमेन च प्रचलति।

केवलं पाणिनि-सम्प्रदाय एव भारतवर्षे प्रचलितो न बभूव तदतिरिक्तमन्ये व्याकरणसम्प्रदायाः सुविदिता आसन्। ते च-ऐन्द्र-चान्द्र-काशकृत्स्न-जैनेन्द्र-हेमचन्द्र-नामभिः संख्यावन्तः समभूवन्। किन्तु पाणिनिव्याकरणस्य सर्वोत्कृष्टत्वात् तेषां प्रचारो नाऽभवत्।

एवं हि व्याकरणाध्येतॄणां राष्ट्रभाषाभाषिणां कृते संस्कृतव्याकरणेतिहासः साकल्येनोपबृंहितः। अनेकैर्लेखकैः समष्ट्या विभिन्नेषु प्रकरणेषु व्याकरणशास्त्रस्य प्रस्तुतिः कृता। एते च धन्यवादार्हाः। सैषा प्रस्तुतिः व्याकरणशास्त्रेतिहासजिज्ञासूनां महतेऽवबोधाय वैदग्ध्यमूलाय श्रेयसे च कल्पिष्यत इति मतिर्मम। अस्य व्याकरणखण्डस्य संयोजनादिकार्ये ममान्तेवासी डा. रमाकान्त झा अपि साहाय्यमकरोदिति सोऽप्याशीर्वादभागिति शम्।।

**बलदेव उपाध्यायः**

गुरुपूर्णिमा

विद्या विलासः

वि.सं. २०५५

रवीन्द्रपुरी, वाराणसी।

# प्राक्कथन

भारतीय विचार-सरणि में शब्दशास्त्र का सर्वाधिक महत्व है। भाषा का उद्‌गम स्थान शब्द ही हैं। यदि शब्द-ज्योति से यह संसार आलोकित न होता तो त्रैलोक्य में अंधकार व्याप्त हो जाता। ऐसी स्थिति में क्या दुर्गति होती ? यह कि प्रत्येक प्राणी मूक रहकर अपने दुर्भाग्य से ग्रस्त रहता। शब्द-ज्योति के वरदान को पाकर समस्त जगत प्रदीप्त हो उठा-

**"इदमन्धन्तमःकृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते"।।**
**(काव्यादर्श - दण्डी)।**

शब्द-संहिता के रूप में सर्वप्रथम वैदिक-वाङ्मय के प्रकट होने से व्याकरण वेद का अंग माना गया। कारण यह है कि वेद में अनेकों पदों की व्युत्पत्तियाँ उपलब्ध होती हैं जो व्याकरण की प्राचीनता सिद्ध करने के लिये पर्याप्त मानी जा सकती हैं इस सम्बन्ध में महर्षि पतञ्जलि ही प्रमाणभूत आचार्य हैं। उन्होंने महाभाष्य के प्रथम आह्निक में पांच ऋचाओं को उद्‌धृत कर व्याकरण शास्त्र के प्रयोजनों को सङ्केतित किया है। इसके साथ ही पतञ्जलि ने उनका व्याकरण शास्त्रपरक अर्थ भी दिया है। फलतः आचार्यों की दृष्टि में व्याकरण वेद का ही अंग है। वेद के छहों अंगों में व्याकरण ही सर्वप्रधान है। व्याकरण शास्त्र का उदय कब हुआ - इस संबंध में अधिकतर विद्वानों की यह धारणा है कि पदपाठ में प्रकृति का प्रत्यय से, धातु का उपसर्ग से तथा समस्त पदों के पूर्व का उत्तर पदों से विभाग पूर्णतया प्रदर्शित किया जाता है और यह विभाजन पद्धति व्याकरण शास्त्र के अनुशीलन पर पूर्णतः आधृत है। गोपथ ब्राह्मण (पूर्वार्ध १/२४) में व्याकरण के अन्तर्गत प्रातिपदिक आख्यात, लिङ्ग, वचन, विभक्ति, प्रत्यय आदि प्रख्यात पारिभाषिक पदों का उल्लेख मिलता है। इसके अतिरिक्त अन्य ब्राह्मण-ग्रन्थों में भी इस प्रकार के पारिभाषिक शब्दों की विद्यमानता से व्याकरण शास्त्र की प्राचीनता तथा वेदाङ्गता प्रतिफलित होती है।

व्याकरणाध्ययन के संबंध में भी प्राचीन वैयाकरणों ने सूक्ष्म विचार किया है, महाभाष्य के प्रथम आह्निक में इस संबंध में विचार व्यक्त करते हुए पतञ्जलि ने अपने पूर्ववर्ती वैयाकरण कात्यायन द्वारा विचारित पांच प्रयोजनों की विषद व्याख्या करते हुए उससे सम्बद्ध अनेक वैदिक मन्त्रों को विवेचित किया है। इस प्रकार वैदिक तथा लौकिक शब्दों के वास्तविक रहस्य को ज्ञात करने में शब्दशास्त्र का महत्व सर्वविदित है।

यद्यपि अनेक शताब्दियों से पाणिनि व्याकरण का ही सर्वत्र प्रचलन दिखाई पड़ता है तथापि पाणिनि से पूर्व अनेक वैयाकरणों ने अपने सम्प्रदायों को जन्म दिया था। पाणिनि ने अपनी अष्टाध्यायी में दस वैयाकरणों का उल्लेख किया है। इन दस वैयाकरणों के

अतिरिक्त दस अन्य व्याकरण सम्प्रदाय भी प्रचलित रहे जिनमें ऐन्द्र व्याकरण अत्यधिक विस्तृत तथा व्यापक रहा। वैदिक व्याकरण के सम्बन्ध में प्रातिशाख्यों की मान्यता है। उपरिनिर्दिष्ट पाणिनीयेतर व्याकरणों में विविधता है। कुछ वैयाकरणों ने केवल लौकिक शब्दों पर ही विचार किया है तथा अन्य विद्वानों ने लौकिक और वैदिक दोनों की परिधि स्वीकार की है। किन्तु उनके ग्रन्थों के उपलब्ध न होने से उनकी समग्रता का बोध नहीं हो सकता। विविध ग्रन्थों में यत्र-तत्र उपलब्ध उद्धरण प्राप्त होने से उनके सिद्धान्तों का थोड़ा बहुत परिचय होता है।

पाणिनि के व्याकरण ने अपने पूर्ववर्ती वैयाकरणों को निस्तेज कर दिया। उनकी अष्टाध्यायी सूत्र रूप में प्रकट होकर वैदिक और लौकिक व्याकरणों को मूर्त रूप देने में समर्थ हुई। अष्टाध्यायी का वर्गीकरण अत्यधिक वैज्ञानिक है। प्राचीन अध्यापन की दृष्टि से पाणिनि ने यथोद्देश पक्ष को अंगीकार किया है। क्रमशः उसका अध्ययन करने से पौर्वापर्य संगति मिल जाती है। आगे चलकर प्रक्रिया ग्रंथों की रचना करते समय ग्रन्थकारों ने कार्यकाल पक्ष को अंगीकार कर पाणिनि-सूत्रों के क्रम को शब्दरचनानुरूप परिवर्तित कर दिया। पाणिनि के अनन्तर कात्यायन ने अपने वार्तिकों की रचना की और इसीलिये वे 'वार्तिक्कार' के नाम से प्रख्यात हैं। वार्तिकों का क्रमिक स्वरूप अष्टाध्यायी के समान मौलिक पाठ के रूप में विद्यमान नहीं है।

महाभाष्य में विकीर्ण होने से वार्तिकों का संकलन किया जा सका। तृतीय आचार्य पतञ्जलि ने महाभाष्य की रचना कर अष्टाध्यायी के सूत्रों तथा वार्तिकों पर विस्तृत व्याख्या लिखकर पाणिनीय व्याकरण को प्रौढ़ता के उच्च शिखर पर पहुंचा दिया है। परन्तु इस युग का विशालकाय लक्ष श्लोकात्मक परिणाम वाला 'संग्रह' नामक ग्रन्थ सदा सर्वदा के लिए विस्मृति के गर्त में चला गया। इसके रचयिता महर्षि 'व्याडि' की स्मृति व्याकरण ग्रन्थों में उपलब्ध कतिपय उद्धरणों तथा उल्लेखों से ही जागरुक है। उपर्युक्त तीनों आचार्यों द्वारा विरचित व्याकरण को पतञ्जलि के महाभाष्य ने यद्यपि पूर्णता प्रदान कर दी, फिर भी उसको स्पष्टतर करने की आवश्यकता को देखते हुए इन ग्रन्थों पर वृतियाँ तथा व्याख्याएं लिखने की ओर अनेक विद्वान् अग्रसर हुए। प्रथम व्याख्याकारों में जयादित्य, वामन, हरदत्त, कैयट आदि अधिक प्रसिद्ध रहे।

प्रक्रिया ग्रन्थों में जयादित्य-वामन द्वारा विरचित काशिका सर्व प्रसिद्ध है। सूत्रक्रमानुसार काशिका ने व्याख्यान एवं उदाहरणों तथा वार्तिकों का यथास्थान समावेश कर ग्रन्थ की उपयोगिता विदित कराई। इस ग्रन्थ के टीकाकारों में जिनेन्द्रबुद्धि का 'न्यास' तथा हरदत्त की 'पदमञ्जरी' सुप्रसिद्ध है। आगे चलकर भट्टोजीदीक्षित आदि विद्वानों ने इनके मतों का समर्थन एवं खण्डन कर काशिका की उपादेयता को स्वीकार किया है। वस्तुतः काशिका ही पाणिनि सूत्रों की मौलिकता प्रदर्शित करती है। काशिकाकार ने यथोद्देश्य पक्ष को स्वीकार

किया है। सूत्रानुसारी व्याख्याताओं में महाभाष्य के टीकाकार 'कैयट' तथा 'नागेश' का नाम अविस्मरणीय है।

अनेक शताब्दियों तक काशिका की उपादेयता बनी रही, किन्तु अध्यापन में सरलता लाने हेतु कार्यकाल पक्ष को अङ्गीकार कर अनेक आचार्य सूत्रक्रम में विषयानुकूल परिवर्तन कर नवीन दृष्टिकोण लेकर अग्रसर हुए। यह परिवर्तन प्रयोगसिद्धि की दृष्टि से सरल प्रतीत हुआ। तथा परिवर्तनानुकूल सूत्रों की वृत्तियों में भी नवीनता लाई गयी। इस परिवर्तन के प्रवर्तकों में रामचन्द्राचार्य, शेष श्रीकृष्ण, भट्टोजीदीक्षित, नागेश आदि उल्लेखनीय हैं। इस प्रकार इन विविध स्थितियों को पार कर पाणिनीय व्याकरण वर्तमान काल में उपनीत हुआ है जिसमें उसकी प्रौढ़ता तथा अंतरंग अध्ययन के साथ-साथ उसके बहिरंग अनुशीलन की ओर भी विद्वानों की प्रवृत्ति जागरुक है।

सूत्रों की इस परिवर्तित योजना करने वालों में भट्टोजिदीक्षित सर्वाग्रणी रहे। उनकी सिद्धान्तकौमुदी' सर्वाधिक प्रसिद्ध हुई। दीक्षित ने अष्टाध्यायी के समान लौकिक और वैदिक शब्दों की सिद्धि तथा वार्तिकों का एवं प्राचीन वैयाकरणों के सिद्धान्तों का यथास्थान समावेश कर अपने ग्रन्थ की सार्थकता सिद्ध कर दी। उनके पुत्र, पौत्र, भाई तथा भतीजे सभी विद्वान हुए। और प्रत्येक ने विविध ग्रन्थ लिखकर यश प्राप्त किया। दीक्षित को स्वयं अपने ग्रंथ 'सिद्धान्तकौमुदी' की व्याख्या 'प्रौढ़मनोरमा' लिखनी पड़ी। इन्हीं के समकालिक नारायण भट्ट भी महान वैयाकरण हुऐ। जिनका 'प्रक्रियासर्वस्व' पाणिनीय शब्दों के अतिरिक्त अपाणिनीय शब्दों की साधुता सिद्ध करने के कारण प्रसिद्ध हुआ। इनकी यह रचना फिर भी 'सिद्धान्तकौमुदी' के समान प्रचारित नहीं हो सकी।

कार्यकालपक्ष पर आधारित इस नवीन पद्धति की प्रतिक्रिया यह हुई कि जन-समुदाय व्याकरण के मुख्य नियमों को जानने तक ही अपने को सीमित रखने लगा। इसके फलस्वरूप कौमुदी-ग्रन्थों के संक्षेप करने की ओर वैयाकरण अग्रसर हुए। कुछ ही दिनों में सिद्धान्तकौमुदी के दो रूप-मध्यसिद्धान्तकौमुदी तथा लघुसिद्धान्तकौमुदी सामने आये। इन दोनों ग्रन्थों में 'सिद्धान्तकौमुदी' की अपेक्षा लाघव के अतिरिक्त क्रमविन्यास में भी भिन्नता है। भट्टोजिदीक्षित ने सिद्धान्तकौमुदी की टीका स्वयं लिखकर प्राचीन आचार्यों की अनेक स्थानों पर समालोचना भी की है तथा उनके पौत्र हरिदीक्षित ने प्रौढमनोरमा पर 'शब्दरत्न' नामक व्याख्या लिखी। कहा जाता है कि यह व्याख्या सुप्रसिद्ध विद्वान् 'नागेश' ने लिखी थी। दीक्षित के कुछ ही समय पश्चात 'शब्दकौस्तुभ' के समान विश्वेश्वर पाण्डेय ने 'व्याकरणसिद्धान्तसुधानिधि' नामक आकरग्रन्थ की रचना कर एक नया कीर्तिमान स्थापित किया। इन्होंने सब शास्त्रों में ग्रन्थ रचना की है। इस ग्रन्थ की विशेषता यह है कि इसमें व्याकरणशास्त्र के विचारणीय विषयों को तर्क एवं मीमांसा की कसौटी पर कस नवीनता प्रदान की है। प्रकृत-ग्रन्थ में दीक्षित के मतों की अनेक स्थानों में समीक्षा की गई है।

तदनन्तर ईसा की १८वीं शताब्दी के आरम्भ में व्याकरण की अध्यापन शैली में वैचारिक परिवर्तन हुआ। इसका यह परिणाम हुआ कि मूल ग्रन्थों की रचना एक प्रकारसे बन्द हो गई और व्याख्याऐं अधिक लिखी जाने लगीं। इसके फलस्वरूप शैली की नवीनता ने व्याकरण को तार्किकता के साथ समन्वित कर दिया। नागेश के दो ग्रन्थों- 'लघुशब्देन्दुशेखर' तथा परिभाषेन्दुशेखर'- का अध्ययन एवं अध्यापन विशेष रूप से प्रचलित हुआ और इन्हीं पर आधारित विशेष स्थलों पर शास्त्रार्थ करने की प्रथा चल पड़ी। इस कार्य में गंगाराम शास्त्री त्रिपाठी अग्रसर हुये। आगे चलकर इनकी शिष्य परम्परा ने इस शैली को समुन्नत किया। गुरु परम्परा के अनुसार शिष्य और प्रशिष्य इन परिष्कारों की कोटी-प्रकोटियों में नवीनता लाने का प्रयत्न करने लगे। इस शैली से प्रभावित हो सुदूर दक्षिण नेपाल, महाराष्ट्र, गुजरात, आदि से विद्वानों का काशी आगमन होना प्रारम्भ हुआ। तथा इन स्थानों पर भी नूतन शैली का अच्छा प्रचार हुआ। इस नवीन परम्परा का प्रचार राजकीय संस्कृत महाविद्यालय काशी के आचार्य सुप्रसिद्ध विद्वान् काशीनाथ शास्त्री अष्टपुत्रे के समय से प्रारम्भ हुआ और अद्यावधि चल रहा है। किन्तु अब वह पुरातन गतिशीलता नहीं रही है। 'शेखरद्वय' पर अनेक विद्वानों ने टीकाऐं लिखीं तथा शास्त्रार्थ के स्थल विशेषों पर क्रोडपत्र भी लिखे। इसी परम्परा में बाल शास्त्री रानडे के समय यागेश्वर ओझा प्राचीन परिपाटी के महनीय पंडित रहे। बालशास्त्री के ये वैयाकरण शिष्य नव्य व्याकरण के क्षेत्र में विशेष प्रसिद्ध हुए-पं. शिवकुमार शास्त्री, पं. दामोदर शास्त्री, पं. तात्या शास्त्री, तथा पं. विश्वनाथ दण्डी भट्ट। बाल शास्त्री के ही शिष्य गङ्गाधर शास्त्री तैलंग का वैदुष्य सब शास्त्रों में निर्बाध रहा। इन सब विद्वानों के शिष्यों में से गङ्गाधर शास्त्री तैलङ्ग के शिष्य नित्यानंद पंत पर्वतीय अपनी विद्वत्ता तथा त्याग के कारण सुविदित रहे हैं। इन्होंने 'लघुशब्देन्दुशेखर' पर 'दीपक' टीका लिखकर गुरुपरम्परागत परिष्कारों की सुरक्षा की। अन्य वैयाकरणों में नेपाल के राजगुरु हेमराज जी, जयदेव मिश्र, हरिनारायण त्रिपाठी, रामयशस्त्रिपाठी, सभापति उपाध्याय, रामाज्ञा पाण्डेय आदि प्रसिद्ध हुए हैं। विशेष विस्तार के लिए काशी की पाण्डित्य परम्परा' ग्रन्थ अवलोकनीय है। इसके साथ ही प्राचीन प्रक्रियाग्रन्थों का अध्ययन-अध्यापन विद्यमान रहा। काशी में ही रामनाथ द्विवेदी, ब्रह्मदत्त जिज्ञासु, काशीनाथ शर्मा, रघुनाथ शर्मा आदि विद्वानों ने प्राचीन प्रक्रिया प्रणाली के साथ ही व्याकरण शास्त्र के दर्शनपरक ग्रन्थों का विशेषतया आलोडन किया।

व्याकरण शास्त्र केवल शब्द साधुता के लिए ही प्रसिद्ध नहीं है किन्तु उसका दार्शनिक पक्ष भी उसकी मौलिक देन है। इस पक्ष में 'भर्तृहरि' का नाम उल्लेखनीय है। इनके ग्रन्थ 'वाक्यपदीय' में व्याकरण का दार्शनिक पक्ष उभर कर आया है। कात्यायन के द्वारा आरोपित दार्शनिक पृष्ठ भूमि का प्रकीर्ण रूप पतञ्जलि ने पल्लवित कर आगे के ग्रन्थकारों को पूर्ण रूप से प्रतिफलित करने का अवसर दिया। इस कार्य को भर्तृहरि ने पूरा किया।

उन्होंने छन्दोबद्ध रचना कर 'वाक्यपदीय' के तीन काण्डों में दार्शनिक विश्लेषण के साथ ही शाब्दिक प्रक्रिया के अङ्गों पर भी पूर्ण रूप से विचार किया है। भर्तृहरि ने 'महाभाष्य' पर भी टीका लिखी है। यह व्याख्या सम्पूर्ण उपलब्ध नहीं है। इनके गुरु 'वसुरात' थे। यह वामन और जयादित्य से कुछ प्राचीन रहे। कौण्डभट्ट, नागेश आदि ने भी अपने-अपने ग्रन्थों में दाशनिक पक्ष को पल्लवित किया है। वर्तमान काल में ऐतिहासिक पक्ष की ओर भी अनेक विद्वानों का ध्यान आकृष्ट हुआ है। इनमें से कतिपय तो विदेशी विद्वान् रहे हैं तथा भारतीयों में अंग्रेजी भाषा में तथा अन्य विद्वानों ने देशी भाषाओं में भी "ज्ञान-कोष" के माध्यम से व्याकरण शास्त्र के इतिहास का समावेश किया है। इतिहास की गति क्षण-प्रतिक्षण बदलती रहती है और वह सदैव साकाङ्क्ष रहता है और उसकी स्वतः पुनरावृत्ति होती है।

प्रस्तुत ग्रंथ मेरे शिष्य श्री गोपाल दत्त पाण्डेय ने सम्पादित कर यथाशक्ति उपयोगी बनाया है। यद्यपि ग्रन्थ के आरम्भ करने के पश्चात् दृष्टि-मान्द्य होने पर इन्होंने अपनी कठिनाई विदित कराई थी किन्तु तत्कालीन निदेशक श्री मधुकर द्विवेदी के आग्रह पर इन्होंने कार्य पूर्ण करना स्वीकार कर लिया। संस्कृत संस्थान के सहायक निदेशक डा. चन्द्रकान्त द्विवेदी की कार्यतत्परता से बृहद् इतिहास के प्रकाशन का कार्य प्रशस्त हुआ है। देववाणी की सेवा के प्रति समर्पित अपने प्रिय शिष्य डा. रमाकान्त झा को मैं हृदय से आशीर्वाद देता हूं। संस्कृत व्याकरण इतिहास का जिज्ञासु वर्ग प्रकृत ग्रन्थ से लाभान्वित होगा ऐसी मेरी धारणा है।

शुभं भवतु

शुभाकाङ्क्षी

गुरू पूर्णिमा

**बलदेव उपाध्याय**

वि.सं. २०५५

विद्या विलास

रवीन्द्रपुरी, वाराणसी।

# भूमिका

'अथ शब्दानुशासनम्' इति शब्दयता शेषावतारेण भगवता पतञ्जलिना 'शासनात् शंसनात् शास्त्रम्' इति शास्त्रशब्दस्य निर्वचनं हृदयङ्गमय्य शास्त्रस्यास्य अनुशासनत्वं समर्थितम्। तथा च 'व्याक्रियन्ते = व्युत्पाद्यन्ते शब्दा अनेन व्याकरणमिति व्युत्पत्त्या शब्दसाधुत्वप्रातिपादनमेवास्य शास्त्रस्य प्रधानं प्रयोजनम्। 'प्रधाने च कृतो यत्नः फलवान् भवति' इति महाभाष्यकारः सविशेषं प्राह। अथ च गीर्वाणवाणी द्विविधा-वैदिकी लौकिकी च। तत्र च वेदार्थ-प्रतिपादकानि षडङ्गानि सुप्रसिद्धान्येव। तत्र च व्याकरणमिदं वेदपुरुषस्य मुखमिवप्रधानतां भजते। अनेकविधेषु वाग्विलासेषु वैखरी वाक् मुखविवरणात् बहिराविर्भूय लोके शब्दस्वरूपतां धारयतीति सा शब्दानुशासनस्य प्रामुख्यं द्योतयति शब्दज्योतिरखिलं जगदभिव्याप्याखण्डमर्थजातं प्रकाशयल्लोकव्यवहारोपयोगिभाषास्वरूपे परिणमति। यथा चाह दण्डी-

> ''इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।
> यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।(काव्यादर्शः)

भाषाया उत्पत्तिसम्बन्धे भाषावैज्ञानिकानां मतवैभिन्न्यम्। वाग्विलासम् जगदीश्वरप्रसवं मान्यमान्येषु अन्यतमः श्रीमहामाहेश्वरो जयद्रथः स्वकीयस्य हरचरितचिन्तामणिः शब्दशास्त्रावतारनामके सप्तविंशप्रकाशे भाषायाः दैविकं प्रसवमाख्यापितवान्। तद्यथाऽनुश्रूयते-''पुरा किल प्रपञ्चमातापितरौ पार्वतीपरमेश्वरौ कैलासशिखरसमारूढौ परमां मुदमुपयेतुः। तत्र च सन्तोषातिरेकान्महेश्वरेण 'किं ते प्रियं करवाणीति सानुनयमनुरञ्जिता पार्वतीकेनाप्यश्रुतपूर्वा विस्मयावहा कथा श्रुतिविषयीकरणीयेति प्रार्थितवती। वार्तालापप्रसंगे अन्तः प्रवेशनिरोधाय द्वारि नन्दिकेश्वरो नियोजितः अत्रान्तरे महेश्वरभक्तिः गणान्यतमः पुष्पदन्तसंज्ञकः अन्तःप्रवेशं याचमानः नन्दिकेश्वरेण प्रतिरूद्धो योगाभ्यासबलेन गृहीतमधुकरवेषः महेश्वरनिवेदितम् अद्भुतं विद्याधरचरितं निशम्य स्वभार्यायै जयायै यथावत् श्रावयामास। प्रसङ्गविशेषे च पार्वत्या तच्चरिते सहचरीकृते निवेद्यमाने जया तच्चरितं परिचिनोतीत्यालोच्य नापूर्वं चरित महेश्वरेण श्रावितमिति रुष्टा महेश्वरमध्याक्षिपत्। महेश्वरोऽपि योगवलेन पुष्पदन्तः सर्वमिदमवगतवान्' इत्यालोड्य तस्मै पुष्पदन्ताय तत्सहचराय माल्यवते च 'मर्त्ययोनिं प्राप्नुतम्' इति शशाप। जययाऽनुरुद्धो भगवान् 'कुबेरशापात् पिशाचयोनिं समधिगतः महेश्वरामुचरः सुप्रतीकः विन्ध्यारण्यं पर्यटन् काणभूतिनाम्ना प्रसिद्धिमापन्नः पुष्पदन्तमुखात् मया निवेदितं विद्याधरचरितं श्रोष्यति, तदा पुष्पदन्तः शापमुक्तो भविष्यतीति अनुजग्राह।

ततः स **पुष्पदन्तः** कौशाम्बीनगर्यां प्रयागसमये यमुनातीरे 'कोसम' इति ख्यातायां सोमदत्तद्विजन्मना वसुदत्तायां पुत्रत्वं प्राप्तः **वररुचि** नाम्ना अवर्धत। पितरि दिवंगते सति

एकदा वीतसीनगरवास्तव्यौ महातपस्विनौ व्याडिः इन्द्रदत्तश्च आगत्य मातरं निवेदयामासतुः यत् नन्दराजस्य राजधान्यां पाटलिपुत्रे श्रीशंकरस्वामितनयौ वर्षः उपवर्षश्च निवसतः। तत्र ज्येष्ठः वर्षाचार्यः षडाननाराधनाद् अधिगतसमस्तविद्यासकृत्ग्राहिणं कंचन शिष्यं प्रतीक्षते, यस्मिन् सत्पात्रे निखिलां वाचं निक्षिप्य कृतार्थी बुभूषति।" इति। ततश्च व्याडीन्द्रदत्ताभ्यां साकं वर्षाचार्यसमीपम् उपेयिवान् वररुचिः समस्ताः विद्याः जग्राह। तदाच-

**"सकृच्छ्रुतं वररुचिः व्याडिश्च द्विश्रुतं वचः।**
**निःश्रुतं चेन्द्रदत्तश्च जग्राह गुरुणोदितम्।।" इति।**

ततो वर्षाचार्यसमीपं पेशावरप्रान्ते लाहौरनाम्नाऽद्यत्वे ख्याते शालातुरनगरे समुत्पन्नः दाक्षीपुत्रः पाणिनिरपि मन्दबुद्धिरगमत्। स च शिष्यान्तरविदितोपहासेन खिन्नचेताः विद्याकामः प्रयागतटेऽक्षय्यवटे तीव्रतपश्चरणेनं महेश्वरं प्रसाद्य तत्कृपया दिव्यं व्याकरणं प्रणिनाय। दिनसप्तकं यावत् वादं विधाय पाणिनिः वररुचिं विजितवान्। ततः पूर्वप्रचलितमैन्द्रव्याकरणं प्रायः लोपं लेभे। कार्तिकेयप्रसादेन पाणिनीयव्याकरणरहस्यं स्वयं बुद्ध्वा वर्षाचार्यः व्याडिमिन्द्रदत्तं च तद्ग्राहयामास। अपमानितो वररुचिश्च महेश्वरं समाराध्य प्रत्यावृत्त्य पाणिनीयशास्त्रं सहस्रशो वार्तिकानि निर्माय उक्तानुक्तदुरुक्तप्रख्यापनेन विशीर्णतां प्रापयत्। व्याडिश्च पाणिनीये लक्षसंख्यश्लोकात्मकं संग्रहग्रन्थं प्रणिनाय। पाणिनिस्तु वररुचिना कात्यायनेनकृतं स्वव्याकरण विवादात्मकं वार्तिकग्रन्थमसहमानो वररुचिं 'अचिरात् पतिष्यति' इति शशाप वररुचि रपि क्रुद्धः सन् 'त्वं हिंस्रेण व्यापादितो भविष्यतीति पाणिनिं प्रतिशशाप। तस्यामेव त्रयोदश्यां पाणिनिः सिंहेन व्यापादितः कैलासं जगाम। अतोऽद्यापि त्रयोदश्यां व्याकरणानध्ययनपरिपाटी न दृश्यते। पंचतंत्रे विष्णुशर्मा एवमाह-

**"हिंस्रो व्याकरणस्य कर्तुरहनत् प्राणान् प्रियान् पाणिनेः**
**मीमांसाकृतमुन्ममाथ सहसाहस्तीमुनिं जैमिनिम्।**
**छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलं**
**ह्यज्ञानावृतचेतसां मतिरुषां कोऽर्थातिरश्वांगुणैः १ ।।"**

वररुचिरपि साचिव्याद् विरक्तो निजशापावसानमनुसन्दधानः कुबेरशापाद् अधिगतपिशाचयोनेः काणभूतेः सुप्रतीकस्य उपकन्ठं समुपसर्पन् दिव्याः कथाः श्रावयित्वा शापात् निर्मुक्तः पुनरपि पुष्पदन्तरूपेण कैलासं समधिगतवान्। काणभूतिरपि वररुचि (पुष्पदन्त) पक्षपातित्वात् महेश्वरेण शप्ताय माल्यवते (गुणाढ्याय) पुप्पदन्तोदिताः बृहत्कथाः श्रावयामास। तेन गुणाढ्योऽपि शापमुक्तोबभूव" इति।

प्रसङ्गोपात्तेन अमुना कथावस्तुना विज्ञातुमिदं भवति यत् महर्षिः पाणिनिः शब्दज्योतिषः प्रकीर्णान् किरणान् उपादानकारणतां प्राप्तेन नृत्तावसाननिनादितडमरूसमुद्भूतवर्णसमाम्नाय

स्वरूपेण हृदयङ्गमय्य संचस्कार शब्दानुशासनव्याजेन लौकिकाऽलौकिकीं हृद्यां सुरगवीम्। समर्थयन्ति पाणिनीयशिक्षापद्यानीमानि-

"आत्मा बुद्धया समेत्याऽर्थान् मनो युंक्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।। " इति
"सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते.................. इति च
वाल्मीकिरामायणे तु हनुमतः नवविधव्याकरणज्ञानवत्त्वं संसूचितम्।
पर्यगण्यन्तनवानि व्याकरणानि -
"ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्।।"

यद्यपि रामायणयुगे पाणिन्यादीनां प्रादुर्भावो न बभूव, तथापि पूर्वपूर्वकल्पीयनवविध व्याकरणसत्त्वं तन्मूलकत्वं चोत्तरकल्पीयव्याकरणस्य सिद्ध्यति। अतएव **'शताच्च ठन्यतावशते'** (५/१/२१) इति सूत्रे कैयटे शाकलकाशकृत्स्नव्याकरणत्वं 'शताच्च ठन्यतावग्रन्थे' इति सूत्र मुपन्यस्य तन्मते 'शत्यः शतिको वा गोसंघः' इति साधु। पाणिनिमते तु 'शतको गोसंघः' इत्येव साधु इति व्याकरणस्मृतीनां परस्परविरोधो नाशङ्कनीयः यतः सामान्यरूपेण अधुनापि प्रचलिताः भाषाः नदीजलधारा इव सततं परिवर्तनशालिन्यः तथैव सुरगवी अपि युगानुरूपं परिवर्तमाना नटीव जनमनांसि आवर्जयति रञ्जयति च। नियतकालाश्च स्मृतयः। लौकिक वैदिकोभयविधशब्दविषयकत्वाच्चाऽस्य वेदाङ्गत्वम् - तथैव च वृहत्कथादिषु पाणिनिव्याकरणस्य प्रसारविषये वर्णनं विद्यते। तदनुसारेण पाणिन्यादेरनन्तरं व्याघ्रभूति-श्वोभूतिभ्यां क्रमेण पाणिनिकात्यायनशिष्याभ्यामिदं व्याकरणं बहुतरप्रचारतामानायि। तदनुसारं श्रीशेषशायिनो वैकुण्ठनाथस्य समाधौ महेश्वरीयलीलाताण्डवदर्शनानन्दानन्दतुन्दिलितशरीरस्य गौरवमसहमानः शेषनागः समाध्युत्थानानन्तरं भगवन्तमाकस्मिकशरीरगौरवकारणमन्वयुङ्क्त। भगवांश्च प्रसन्नो महेश्वरलीलाताण्डवदर्शनजन्यानन्दतुन्दिलतया वपुषो गौरवं संजातमित्युक्त्वा, "भगवान् महेश्वरो" मन्मुखेन पाणिनीयव्याकरणस्य व्याख्यानं सारवत्तरं कुरु इति त्वामादिशतीति" शेषनागं निरदिशत्। तदन्तरं श्रीशेषनागोऽपि भगवतः महेश्वरस्य आज्ञां प्रसादरूपेण मन्यमानः जनकल्याणाय गोनर्ददेशे प्रादुरभवत्। तत्र कस्यचिन्महर्षेः सन्ध्यावन्दनसमये तस्य अर्घ्याञ्जलौ आगचछत् तदा महर्षिणा कोभवान्' इति पृष्टे 'सर्पोऽहम्' इति उत्तर दत्तवान्। 'रेफः क्वगतः' इति पृष्टे 'त्वया हृतः' इत्युक्तवान्। तदनन्तरं तस्य महर्षेः अञ्जलेः पतितः इति पतञ्जलिरिति लोके प्रख्यापितोऽभूत्। तदानीं पाणिनीयव्याकरणपिपठिषुभिश्छात्रैः प्रार्थितः पतञ्जलि उक्तवान् यद् अहं जवनिकान्तर्हितः सन् पाठयिष्यामि यदि कोऽपि छात्रः माम् अवलोकयिष्यति तर्हि अनिष्टं भविष्यतीति। प्रतिदिनं यावत् पाठितम् अभूत् तदेकमाह्निकमभूत्।

एवं क्रमेण द्वात्रिंशत दिनानि व्यतीतानि त्रयस्त्रिंशे दिने 'कृदतिङ्' (पा.सू. ३/१/९३) इति सूत्रव्याख्यानानन्तरं "कथमयं सहस्रानस्मान् युगपत् बहुभिः मुखैः सशङ्कासमाधानं पाठयति, तर्हि बहूनि अस्य मुखानि भवेयुरिति" शङ्कितास्छात्राः जवनिकामपसारयामासुः दृष्टवन्तश्चाभूतपूर्वं स्वरूपं सहस्रावधानपरकस्य सहस्रवदनस्य शेषनागस्वरूपस्य। तदैव ते शिष्याः शेषनागस्वरूपपतञ्जलेः फुत्कारेण भस्मसादभवन्। तैर्यावत् श्रुतं तदेव **वासरूपोऽस्त्रियाम्**' (पा.सू. ३/१/९४) इति सूत्रान्तं प्राथमिकं भाष्यमिति लोकप्रवादः। तदन्तराले कार्यवशाद्बहिर्गतः छात्रैकः तत्र समायातः तदा क्रुद्धः पतञ्जलिः तम् शशाप-त्वं पाठमध्ये बहिर्गतोऽतस्तेनापराधेन राक्षसो भव इति। सोऽपि छात्रः पुनः पुनः प्रार्थयामास स्वकीय शापावसानार्थं। प्रार्थितश्च पतञ्जलिः कृपां कृत्वा तमकथयत्-यः कश्चित् पचेः निष्ठान्तं रूपं यथार्थम् वदिष्यति सः मत्पद्धत्यनुसारेण त्वया महाभाष्यं पाठनीयः इति। स एव ते शापान्तकालः। अवशिष्टं महाभाष्यं सर्वेभ्यः छात्रेभ्यः प्रपाठ्य शेषनागस्वरूपी पतञ्जलिः तत्रैव योगबलेनान्तरधात्।

स च शापितश्छात्रः राक्षसीं योनिं प्राप्य चन्द्रगुप्त नामानं ब्राह्मणं पचेः निष्ठान्तं रूपं पप्रच्छ। तस्यमुखात् यथार्थं पक्वमिति रूपं श्रुत्वा तमेव ब्राह्मणं महाभाष्यमध्यापयामास। चन्द्रगुप्तोऽपि वटपत्रेषु महाभाष्यं संलिख्य उज्जयिनीं प्रतस्थे। मार्गे विश्रम्य स्वापं गते ब्राह्मणे सति काचिद् अजा कानिचन वटपत्राणि मुखे न्यवेशयत्। तेन जागरितः ब्राह्मणः खिन्नः सन् अवशिष्टानि वटपत्राणि गृहीत्वा उज्जयिनीम् आगतवान् समीचकार च खण्डितभागं स्वाधीतस्मृत्यनुसारेण। अनुश्रूयते च यत् अस्यैव ब्राह्मणस्य पुत्रेण महामान्येन भर्तृहरिणा महाभाष्यं गुम्फितं व्याख्यातञ्चेति लोकप्रसिद्धिः।

अनेन प्रकारेण त्रिमुनिव्याकरणमिति शब्दशास्त्रस्य परिनिष्ठिता संज्ञा विश्वविदिता वर्तते। तथैव च पाणिन्यादीनां त्रयाणां मुनीनाम् कालनिर्धारणे विविधानि प्रमाणानि प्राचीनैः नवीनैश्च इतिहासविद्भिः यथानुरूपं सङ्कलय्य प्रथितानि प्रकीर्णानि च विद्यन्ते। तेषु ऐकमत्याभावात् महर्षीणां विद्यमानत्वे निश्चयात्मकं ज्ञानं कठिनं सञ्जायते। तथाऽपि विद्वद्भिराकलिताः विचाराः प्राचीनपद्धत्यनुसारेण पूर्वं प्रदर्श्यन्ते। तथा च विष्णुपुराणानुसारेण कलेरारम्भात् ६५३ मितवर्षानन्तरं पाण्डवकालः ततः १५०० मितवर्षानन्तरं नन्दकालः ततः शतवर्षानन्तरं मौर्यकालः, ततः १३७ मितवर्षानन्तरं शुङ्ग (शृङ्ग) कालः (पुष्यमित्रशुङ्गस्य कालः)। अस्मिन्नेव काले पतञ्जलिराविर्बभूवेति प्राचीनाः इतिहासविदश्च। ततः पूर्वं पाणिनिः ९४८ ई.पू. मितकाले प्रादुर्बभूव तदनन्तरञ्च शतकद्वयानन्तरं शतकत्रयानन्तरं वा कात्यायनस्य विद्यमानता परिकल्प्यते। एषा परिकल्पना माधव शस्त्रिभाण्डारिभिः कृता।

पाणिनेः पूर्वं व्याकरणशास्त्रं सुविस्तृतं चासीदिति प्रमाणकोटिमाटीकते। तत्रापि केचन विद्वांसः पाणिनिना अष्टाध्याय्यां नामोल्लेखपूर्वकं सम्मानिताः, तथापि तेषां वैयाकरणानां ग्रन्थाः सुगुम्फिताः नोपलभ्यन्ते, परन्तु तेषां स्वरूपं समग्रं विदितं नास्ति। तेष्वपि आपिशलिः, काश्यपः, गार्ग्यः, गालवः, चाक्रवर्मणः, भारद्वाजः, शाकटायनः, शाकल्यः, सेनकः, स्फोटायनश्चेति

दशसङ्ख्याकाः पाणिनिसूत्रेषु निर्दिष्टाः सन्ति। तदा तेषां स्वरूपं कदाचिद् विज्ञातमेव स्यात्। तथापि शनैः शनैः पाणिनीयप्रकाशे तेषां प्रकाशः मन्दोऽभवत्। यतोऽग्रे प्रक्रियाग्रन्थेषु पाणिनिपूर्ववैयाकरणानाम् उद्धरणानि परिलक्षितानि सन्ति। तदतिरिक्तं पाणिनेः पूर्वं तेन अनिर्दिष्टा महान्तो वैयाकरणः अवातरन्। ते च इन्द्रः वायुः, भागुरिः, पौष्करसादिः, चारायणः, शान्तनवः, रौढिः, यास्कः, व्याडिः, वररुचिः, कुणिश्च सुप्रसिद्धा अवर्तन्त। तेऽधुनाऽपि पुण्यश्लोका एव।

अनुल्लिखितेष्वेतेष्वपि इन्द्रस्य प्राचीनत्वं सर्वमान्यम्। महर्षिणा पतञ्जलिना इन्द्रस्य महत्वमुट्टङ्कितम्। तथैव स प्राह-"एव हि श्रूयते बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां **शब्दपारायणं** प्रोवाच नान्तं जगाम। बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता, दिव्यं वर्णसहस्रमध्ययनकालो नान्तं जगामेति।" इत्थं च विज्ञायते व्याकरणमिदं पाणिनीयव्याकरणापेक्षया विशालतरमासीदिति कथासरित्सागरे वर्णितम्। अस्य व्याकरणस्य विद्यमानत्वं वैदिकयुगे आसीदिति अस्य पाणिनेः पूर्वतरत्वं सुस्पष्टम्। कानिचित् सूत्राणि अप्यस्य यत्र-तत्र ग्रन्थेषु विकीर्णानि सन्ति। अपरो विद्वान् व्याडिः-पाणिनेः सम्बन्धी समकालिकश्च लक्षश्लोकात्मकसङ्ग्रहग्रन्थस्य प्रणेता पतञ्जलिना निर्दिष्टो दाक्षायणापरनामधेयः यशःकायेनाद्यापि जीवति। व्याकरणदर्शनेऽपि व्याडेः सूक्ष्मेक्षिता सुविदिता वर्तते। 'द्रव्याभिधानं व्याडिः इत्यत्र व्याडेः दार्शनिकता महाभाष्ये प्रख्यापिता वर्तते।

एतेषु निरुक्तकारो यास्को वैयाकरणकोटिं नाटीकते। यद्यपि निरुक्तं वैदिकशब्दानामर्थ प्रकाशनं करोति, तथापि शब्दनिर्वचनमेव व्याकरणस्यादिमं रूपम्। अतो यास्कस्य गणना वैयाकरणेषु प्राचीनकालेऽपि कल्पिताऽऽसीत्। निरुक्ते शब्दस्य विविधा निरुक्तयो दृश्यन्ते। व्याकरणमन्तरा न प्रवर्तते निरुक्तम्। पाणिनिनाऽपि **'पृषोदरादीनि यथोपदिष्टम्'** (पा. सू. ६/३/१०९) सूत्रे वर्णलोप-वर्णविकारादयो निरुक्तप्रकाराः समावेशिताः। अन्ये च पाणिनिना अनिर्दिष्टा वैयाकरणाः खद्योतवत् यत्र-तत्र प्रकाशन्ते।

## त्रिमुनियुगम्

त्रिमुनिषु पाणिनिः सर्वप्रथममाविर्बभूव। तस्य कालविषये विविधानि मतानि यत्र-तत्र प्रतिपादितानि सन्ति। पाणिनेः विख्याता रचना अष्टाध्यायी सर्वाणि व्याकरणानि अतिक्रमते। विश्वस्मिन् जगति पाणिनेः व्याकरणस्य प्रभावः भाषाक्षेत्रे परिलक्ष्यते। अष्टके पाणिनीये लौकिक-वैदिकोभयशब्दानाम् निष्पत्तिः संलक्ष्यते।

अष्टस्वध्यायेषु शब्दराशिशेवधिः सुरक्षिताऽवभाति। तत्र तावत् प्रथमेऽध्याये संज्ञानां परिभाषाणां च वर्णनम्। विभक्त्यर्थाः समासाश्च द्वितीयाध्यायस्य वर्ण्यविषयाः। तृतीयाध्याये धातुभ्यो विहिताः प्रत्ययाः सुव्यवस्थापिताः। तुर्यपञ्चमाध्याययोः तद्धितप्रत्यया निरूपिताः। षष्ठेऽध्याये प्रकृति-सम्बन्धि-कार्यव्याजेन तिङ्-सन्धि-स्वरादीनां निरूपणं विद्यते। सप्तमे ह्यङ्गाधिकारस्थो विषयः सन्निवेशितः। तस्मिन्नेव प्रसङ्गे प्रत्ययसम्बन्धीनि निखिलानि

कार्याण्यपि निरूपितानि। अष्टमाध्यायस्य पूर्वचरणे द्वित्वसम्बन्धि-विधानानि समावेशितानि। तदनु पूर्वत्र प्रकल्पितानि असिद्धप्रकरणानि अष्टमाध्यायस्य अवशिष्टेषु द्वितीय-तृतीय-चतुर्थ-पादेषु समायोजितानि सन्ति। तानि च प्रकरणानि द्वित्व-स्वर-सन्धि-षत्व-णत्वादिनामभिः समाकलितानि सन्ति।

अल्पाक्षरेष्वपि सूत्रेषु महर्षिपाणिनेः महती सूक्ष्मेक्षिका परिलक्ष्यते। पाणिनीयायाः अष्टाध्याय्याः प्रायेण ४००० सूत्रेषु शब्दविषयिणी सर्वा जिज्ञासा परिसमाप्यते। तथा च अष्टकस्य अध्ययने कृते सति शब्दाक्षरविषयकं किमपि ज्ञानं नावशिष्यते। अस्य महामुनेः सूक्ष्मेक्षिकां दृष्ट्वा वैदेशिकैर्विद्वद्भिश्च महता कण्ठेन समादरेण च अस्य गौरवातिशयः समुद्घोषितः। सूत्राणामल्पाक्षरत्वादेव विषयसौकर्यमपेक्षितम्। अतः पाणिनिकाले एव सूत्राणां वृत्तयः विरचिता अभवन्। तेषु वृत्तिकारेषु व्याडिकुणिप्रभृतय आचार्याः स्व-स्वलेखनीं प्रावर्तयन्त।

वृत्तिकारैः प्रवर्तिता कृतयः पाणिनेः सूक्ष्मेक्षिकापर्यालोचने तादृशं साफल्यं नाप्नुवन् यादृशमासीत् अपेक्षितम्। द्विशताधिके काले ह्युपगते भाषायां परिवर्धनमपेक्षितमिति दृशा वार्तिककारः कात्यायनः विस्तरे प्रवृत्तो बभूव। अनेन कात्यायनेन भ्राजाख्याः श्लोका अपि रचिताः। तदन्तर्गत एव 'यस्तु प्रयुङ्क्ते कुशलो विशेषे' इत्ययं श्लोको व्याकरणप्रयोजनवर्णनावसरे भाष्यकृतोपन्यस्तः। वसुदत्तागर्भजः श्रुतधरापरनामधेयः कात्यायनगोत्रीयोः वररुचिः त्रिप्रवरधरः। कात्यायनगोत्रस्य कपिगणे पाठात् तस्य आङ्गिरसबार्हस्पत्यकापेयेति त्रिप्रवरत्वम्। पतञ्जलिना भाष्यकारेण दाक्षिणात्योऽयमिति स्वीकृतम्--'तद्धितप्रिया दाक्षिणात्याः यथा लौकिकवैदिकेषु'। वार्तिकानां निश्चिता सङ्ख्या क्रमिकत्वं च अज्ञातमेव। भाष्यकारेणैव सूत्राणां व्याख्याने वार्तिकस्वरूपं क्रमशो निदर्शितम्। तदन्तरा च यत्र-तत्र इष्टिकाश्च पठिताः। तानि वार्तिकानि दृष्ट्वा काशिकादिग्रन्थकारैः क्रमशस्तत्तत्सूत्रेषु वार्तिकानां सन्निवेशः कृतः। स एव क्रमः प्रक्रियादिग्रन्थेषु भट्टोजिदीक्षितादिभिः गृहीतः। यदि भाष्यकारेण वार्तिकोद्धारः न कृतः स्यात् तर्हि वार्तिकानि विलुप्तान्येव अभविष्यन्।

**त्रिमुनिषु पतञ्जलिरेव मूर्धन्यतां भजते-**
**यथोत्तरं मुनीनां प्रामाण्यमिति वचनात्।**

एवमप्यनुश्रूयते-अयं च पतञ्जलिः योगसूत्रकृतः चरकादिप्रणेतुश्च पतञ्जलेरन्य इति केचित्। स एवायमिति प्रामाणिकाः।" केचित्तु 'पतञ्जलिरिति गोत्रनाम' इत्यपि वदन्ति। गोनर्दीय इति महर्षेः देशजं नाम। माताऽपि गोणिकेति विख्याता तथा चायं 'गोणिकासुत' इत्यपि नाम्ना विख्यायते। भर्तृहरिणा वाक्यपदीये अस्य महामुनेः शैलीमभिलक्ष्य एवं निगदितम्-

**अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात्।**
**तस्मिन्नकृतबुद्धीनां नैवावास्थित निश्चयः।।**
**- वा. प. (२, ४७८)**

दुरुहोऽपि ग्रन्थोऽयं भाष्यकारेण विविधाभिः रीतिभिः व्याख्यानं कुर्वता बोधगम्यमकारि। गद्यमयी रीतिः चूर्णिका विशेषत उपन्यस्ता। प्रश्नोत्तरप्रणाल्या भाष्याशयं स्पष्टं कुर्वन् मध्ये वार्तिकानुप्रवेशैः अष्टाध्याय्याः आवश्यकत्वं वैशद्यं च तत्र-तत्र स्फुटीकृतम्। अग्रे भाष्यव्याख्यानकृता कैयटेन महाभाष्यस्य पारावारवत् महागभीरत्वमनुभूतम्-

**भाष्याब्धिः क्वातिगम्भीरः क्वाहं मन्दगतिस्तथा।**
**छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम्।।**

**- कैयट प्रदीप**

आह्निकेषु अष्टाध्याय्याः विषयविभाजनेन व्याकरणपिपठिषूणां मार्गः प्रशस्तः सञ्जातः। तथा च सर्वप्रथमं भर्तृहरिणा भाष्याब्धौ अवगाह्य भाष्यव्याख्यानेन सह शब्दशास्त्रस्य दार्शनिकताऽपि प्रदर्शिता। तमनुसृत्य कैयट-नागेशादिभिरनेकैः व्याख्यातृभिः भाष्याशयः स्वमतानुसारेण स्पष्टीकृत ः। तेषु कैयटव्याख्यानमेव समेषामेव आधारभूतम्। महाभाष्यभासा भासमाना सर्वा लक्ष्यसिद्धिर्निर्दोषा सञ्जाता। अस्य विरचनानन्तरं पाणिन्युपज्ञं व्याकरण सर्वाङ्गपूर्णं समभवत्।

**प्रक्रियाविमर्शः**-यद्यपि सूत्रार्थसम्पादने महाभाष्याद्याकरग्रन्थेषु प्राचीनप्रक्रियाग्रन्थेषु काशिकादिषु च पाणिन्यष्टकस्य-सूत्रपौर्वापर्यक्रममनुसृत्य यथोद्देशपक्षं चानुमन्य सर्वत्र समानेन रूपेण पतञ्जलिप्रभृतिभिः निर्वाहः कृतो दृश्यते, तथापि कालान्तरे प्रक्रियाग्रन्थेषु कार्यकालपक्षाग्रहेण सूत्राणि विभिन्नप्रकरणेषु यत्र-तत्र विकीर्णानि सञ्जातानि। अतो, विद्वांसः कार्यकालपक्षाङ्गीकार एव छात्राणामभिरूचिं पश्यन्तो लक्ष्यसाधनात्मिकां सरणिमनुसृत्य प्रक्रियाग्रन्थान् व्यरचयन्। अग्रे बहुतिथे काले गते प्रमादात् अष्टाध्यायीक्रमसूत्रपाठः प्रायशो विलुप्तः सञ्जातः, केवलं प्रक्रियाग्रन्थानां पठन-पाठनक्रम एव सर्वत्र प्रचलितोऽभूत्। तेन हेतुना विभिन्नप्रकरणेषु पठितानां सूत्राणां पारस्परिकज्ञानं काठिन्येन सञ्जायते। अष्टाध्याय्यां तु सर्वाणि प्रकरणानि वैज्ञानिकेन विधिना सुसम्बद्धानि वर्तन्ते, परन्तु प्रक्रिया सारल्येन विभिन्नस्थलेष्वपि पठितानि तदुपयुक्तानि सूत्राणि तत्र-तत्रापकृष्य समायोजितानि।

एवम् अष्टाध्यायीमनुसृत्य प्रक्रियाग्रन्थानां द्वैविध्यं परिदृश्यते। तयोः प्रथमं सूत्रक्रमानुसारम्, अपरञ्च प्रक्रिया क्रमानुसारम्। तथापि प्रथमे क्रमे जयादित्यवामनाभ्यां प्रणीता सुप्रसिद्धा **काशिका** काश्यां भवा सर्वथान्वर्था सञ्जाता। यद्यपीयं वृत्तिरिति विज्ञायते तथापि प्रक्रियाग्रन्थेषु अस्या एव आधारो धारितः। अष्टाध्याय्यां पूर्ववर्तिव्याकरणसूत्राणां यथास्थानं समावेशवत् काशिकायामपि पूर्ववर्तिनां पुरातनवृत्त्यंशानां यथास्थानं समावेशः कृतः। व्याख्याने च उदाहरण-प्रत्युदाहरण निगमनादीनां सन्निवेशेन तथैव च गणपाठादिभिः सूत्रोपयोगि-वार्तिकानाञ्च सङ्ग्रहेण प्रक्रियोपयोगिसामग्र्या : समाकलनं कृतम्। लोके वार्तिकानां समष्टिः सूत्रक्रमानुसारिणी काशिकाकारेणैव सन्निवेशिता। अयं महानुभावो भर्तृहरेः शिष्य इति सम्भाव्यते।

यथाष्टाध्याय्या व्याख्यानरूपम् महाभाष्यमनौपम्यं भजते तथैव काशिकाया व्याख्ये न्यासापरपर्याया जिनेन्द्रबुद्धिविरचिता काशिकाविवरणपञ्जिका हरदत्तमिश्रविरचिता पदमञ्जरी च प्रख्याते।

अस्मिन् सन्दर्भे शब्दकौस्तुभ-सिद्धान्तसुधानिध्योः स्मरणमावश्यकम्। यद्यप्येतयोः समावेशः आकरग्रन्थेषु महाभाष्यवत् सम्भवति, तथापि केचन विद्वांसः अष्टाध्याय्याःवृत्ति-ग्रन्थेषु काशिकादिवत् समावेशं कुर्वन्ति। उभावपि ग्रन्थकारौ ईशवीयस्य सप्तदशशतकान्तराले सञ्जातौ।

वस्तुतो लोकोपयोगिप्रक्रियाग्रन्थानामवतारः रुपावतारादेव प्रारब्धः अस्य प्रणेता धर्मकीर्तिः वर्तते। रूपारवतार एव प्रक्रियास्वरूपस्य आदिमो ग्रन्थः। अस्मिन्नेव ग्रन्थे साधनिकायाः प्रथमं स्वरूपं निर्दिष्टं वर्तते। परीक्षा-प्रणाल्याः आधारभूता सरणिः धर्मकीर्तिना एवप्रवाहिता। २६६४ सूत्राणि ग्रन्थेऽस्मिन् प्रक्रियया विस्तारितानि। रुपावतारानन्तरं विमलसरस्वत्या रूपमाला गुम्फिता। अत्र प्रत्याहार-संज्ञा-परिभाषा-सन्धि-सुबन्त-तिङ्न्त-स्त्री-कारक-कृत्-तद्धित समास प्रकरणानि समावेशितानि। अस्यामेव श्रेण्यां प्रक्रियाकौमुदी रामचन्द्राचार्यप्रणीता प्रक्रियाकौशलं वर्धमाना अशोभत। ग्रन्थकृतः पौत्रेण विट्ठलाचार्येण विशदीकृतोऽयं ग्रन्थः प्रसादटीकाप्रसादेन। स्वकीयपितामहेन रचितायाः वैष्णव सिद्धान्त दीपिकायाः न्यायस्नेहप्रपूरणी व्याख्याऽपि विट्ठलाचार्येण व्यरचि।

तदनन्तरं प्रक्रियाग्रन्थानां समग्रं स्वरूपं काशीत एव प्राकाश्यत। तत्र सर्वप्रथमं शेषवंशोद्भवेन कृष्णमहोदयेन **प्रक्रियाप्रकाशो** विरचितः। मुगलसम्राजः अकबरस्य सभा सचिवस्य बीरबलस्य बंशानुकीर्तनम् अनेनैव विदुषा कृतमिति तस्य समकालिकोऽयं विद्वानिति सुनिश्चितमेव। प्रक्रियाकौमुद्याः विस्तृतव्याख्यानभूतो ग्रन्थः प्रक्रियाप्रकाशः प्रक्रियायाः प्रकाशेन परवर्तिनो विद्वांसः समवाप्तज्योतिषः अभूवन्। तत्र अग्रगण्यः भट्टोजिदीक्षितः सिद्धान्तकौमुदीं पुरस्कृत्य लौकिकवैदिकोभयशब्दानुशासनात्मकं कौशलमदर्शयत्। समग्राष्टाध्यायी समावेशिता दीक्षितेनास्यां कौमुद्याम्। कौमुद्याः प्रकाशे पूर्वाचार्यैर्निबद्धाः सर्वेऽपि ग्रन्थतारका अभिभूताः। ग्रन्थनामविषये केचिदेवं वदन्ति यत् सिद्धान्तशुद्धिविबुभुत्सुजनानुरोधात् इति प्रकाशव्याख्यायाः सिद्धान्तशब्दोऽङ्गीकृतः अनेन विदुषा, प्रक्रियाकौमुद्याश्च कौमुदी शब्द इति। कौमुद्यामस्यां प्रक्रिया प्रकरणस्य प्रभावः स्पष्टतया परिलक्ष्यते। स्वाभाविकश्चैष एव। गुरूश्चास्य विदुषः **अप्पय्यादीक्षित** आसीत्। अन्येष्वपि शास्त्रेषु भट्टोजिदीक्षितविरचिता ग्रन्थाः प्रख्याताः सन्ति। कुटुम्बम् एवास्य विद्वत्तल्लजमासीत्। अस्यानुजो रंगोजिभट्टः अद्वैतचिन्तामणिप्रणेता। पुत्रश्च **भट्टोजिदीक्षितस्य** भानुजिदीक्षितो रामाश्रमापरनामा नामलिङ्गानुशासनपरनामामरकोशस्य व्याख्यासुधाटीका कारः शब्दविश्लेषणनिपुणतामगात्। स्वपितुः भट्टोजिदीक्षितस्य शिष्योऽयमिति स्वयमेतेनैव व्याख्यासुधारम्भे एवं निवेशितम्-**बल्लवीवल्लभं नत्वा गुरुं भट्टोजिदीक्षितम्। अमरे विदधे व्याख्यां मुनित्रयमतानुगाम्।**।-रामाश्रमी (प्रारम्भे)

व्याख्यासुधेयं शब्दानुशासनसुधापितैव। भट्टोजिदीक्षितस्य भ्रातुष्पुत्रः कौण्डभट्टः

रङ्गोजिदीक्षितात्मजोपि व्याकरणग्रन्थान् व्यरीरचत्। तेषु वैयाकरणसिद्धान्तदीपिका वैयाकरणसिद्धान्तभूषणं वैयाकरणसिद्धान्तभूषणसारः स्फोटवादश्चेति चत्वारः। भूषण- सारग्रन्थस्य व्याख्याद्वयं काशिकादर्पणञ्चेति सुप्रसिद्धे। तयोः निर्मातारौ च पं हरिरामकेशव काले पं. हरिवल्लभशर्माणौ विद्वत्समाजे मान्यौ।

भट्टोजिदीक्षितस्य महनीयाकृतिः शब्दकौस्तुभः समग्राष्टाध्यायीवृत्तिरूप आकरग्रन्थवद् विराजते। समग्रस्यास्य ग्रन्थस्य प्राप्तेरभावात् विषयक्रमानुसरणं कर्तुं नैव शक्यते। तृतीयाध्यायस्य चतुर्थाह्निकपर्यन्तमेव ग्रन्थोऽयं लिखित इति केषाञ्चिन्मतम्। 'फणिभाषित-भाषाब्धेः शब्दकौस्तुभ उद्धृतः' इति रङ्गोजिभट्टः प्राह।

भट्टोजिदीक्षितस्यैव समकालिको नारायणभट्टः प्रक्रियासर्वस्वकारः प्रक्रियाविषये सर्वस्वं प्रतिपादितवान् दीक्षितभट्टयोः परस्परं दर्शनं न जातम्, नानेन वैयाकरणसिद्धान्त-कौमुदी विलोकिता, न च भट्टोजिदीक्षितेन प्रक्रियासर्वस्वं विलोकितम्। एवं ह्यनुश्रूयते यत् श्रीनारायणभट्टः दीक्षितमहोदयस्य दर्शनार्थं स्वस्थानात् प्रस्थितोऽभवत् किन्तु मार्गे एव दीक्षितस्य निधनं श्रुत्वा परावर्तितोऽभवत्। प्रक्रियासर्वस्वं विंशतिखण्डेषु विभाजितमस्ति। तेषु प्रकरणानुसारेण पूर्वेषां वैयाकरणानां **वामन जयादित्य हरदत्तादीनां** नामोल्लेखपूर्वकं तेषां तेषां मतानां विचारः कृतोऽस्ति। प्रक्रियासर्वस्वस्य सर्वतोऽधिकं महत्त्वम् यदत्र अपाणिनीयानां प्रयोगाणां युक्तायुक्तविचारः कृतोऽस्ति। अनेनैव महानुभावेन धातुकाव्ये पाणिनीयव्याकरणोदाहृत धातूनां क्रमशः प्रयोगः अक्रूरकथाप्रसङ्गेन उदाहृतः।

**सिद्धान्तकौमुद्यादिप्राक्रियाग्रन्थपञ्चकम्**

प्रक्रियाग्रन्थेषु भट्टोजिदीक्षितविरचितायाः सिद्धान्तकौमुद्याः अनन्तरं तामेवाभिलक्ष्य **मध्यसिद्धान्तकौमुदी** भट्टोजिदीक्षित शिष्येण श्रीमता **वरदराज भट्टाचार्येण** वैदिकांशं विहाय लाघवं कृत्वा व्यरचि। अस्यां कौमुद्यां २३१५ सूत्राणि समाकलितानि। तत्रापि लाघवं कृत्वा प्राथमिकछात्राणां कृते लघुसिद्धान्तकौमुदी रचिता तेनैव। सामान्यसंस्कृतज्ञानाय **लघुसिद्धान्त कौमुदी** व्याकरणशास्त्रं प्रकाशयति। अत्र १२७२ सूत्राणि समाहृतानि। अनया दिशा वरदराजेन तात्कालिकी पाठनपद्धतिः प्रदर्शिता। व्याकरणातिरिक्तानां शास्त्राणाम् अध्ययनार्थं सौकर्यमभिलक्ष्य अनेन विदुषा इदं लाघवं कृतम्। अनेनाऽपि लाघवेन छात्रसन्तोषो नाभवत्। तदा **सारसिद्धान्तकौमुदी** लघुतमा विरचिता। वस्तुतोऽनेन ग्रन्थेन प्रारम्भिकच्छात्राणामपि व्याकरणज्ञानं सम्यङ् न जायते।

सिद्धान्तकौमुद्या अनन्तरं तत्समानं ग्रन्थरत्नं नयपालदेशवास्तव्येन पं. सोमनाथ शर्मणा (२० ईशवीये) **प्रतिसंस्कृतासिद्धान्तकौमुदी** व्यलेखि। "प्रतिसंस्कृता" इति पदमस्या वैशिष्ट्यं सूचयति। सिद्धान्तकौमुद्या मूलग्रन्थे ये विषयाः सङ्केतिताः किन्तु अनुल्लिखिता अविद्यन्त, तेषां मूलग्रन्थे एव यत्र-तत्रापेक्षितो भावः परिलक्षितः स खलु मूलग्रन्थे एव नियोज्य

दूरीकृतः। लौकिकशब्दानां सिद्धिप्रदर्शने' एवास्य ग्रन्थस्य उपयोगः, लोके अनपेक्षिता वैदिकप्रयोगा अत्र परित्यक्ताः।

सिद्धान्तकौमुद्याः काठिन्यं स्वयं भट्टोजिदीक्षितेनैवानुभूय तस्याः स्वोपज्ञ व्याख्या **प्रौढ मनोरमा** विरचिता। सा खलु प्रौढानां मनांसि रञ्जयति। न जाने किमनुभूतं दीक्षितेन यत् स एव कौमुद्या व्याख्याने प्रवृत्तोऽभूत् ? अस्मिन् व्याख्याने विशेषतः प्राचीनमतानुयायिनां हरदत्तादीनां मतोल्लेखपूर्वकं युक्तायुक्त-विचारः प्रदर्शितः। अन्यच्च भट्टोजिदीक्षितेन प्रौढ़ मनोरमायां 'प्राञ्चपदेन' प्रक्रियाकौमुदीकारः प्रकाशकारः प्रसादकारश्च स्मृताः। अस्या अपि व्याख्यानमपेक्षितम्, यतोऽत्र सिद्धान्तमतानां विषये विचारो न कृतः। अतो दीक्षितस्य पौत्रेण हरिदीक्षितेन शब्दरत्नं नाम व्याख्यानं विहितम्। अस्य द्वे रूपे लघुशब्दरत्नं, बृहच्छब्दरत्नं चेति विदिते। अस्मिन् विषये वैयाकरणेषु किंवदन्तीयं यत् हरिदीक्षितस्य शिष्यः सुप्रसिद्धो नागेशः गुरोः नाम्ना स्वकीयानि मतानि उद्धृतवान्। गुरुभक्तेरपूर्वमुदाहरणमिदम्। फलतः शेखरादिग्रन्थेषु शब्दरत्नदिशैव विस्तरः कृतः। शब्दरत्नेऽधिकतो भाष्यमतानुसरणं विद्यते। पण्डितराजजगन्नाथेन यत्र-कुत्रचित् भट्टोजिदीक्षितस्य खण्डनं कृत्वा मनोरमाकुचमर्दिनीति लघुटीका अकारि। मनोरमामभिलक्ष्य एतदतिरिक्तम् **चक्रपाणिना** परमतखण्डनं, भट्टोजिदीक्षितस्य पुत्रेण भानुदीक्षितेन च मनोरमामण्डनं मण्डितम्। तात्कालिकी शिक्षामभिलक्ष्य आधुनिके काले श्रीमता सभापत्युपाध्यायमहाशयेन रत्नप्रभया मनोरमा प्रभासिता। तथैव च नेनेपण्डितगोपालशास्त्रिणा सरलाटीकया सरलीकृता। भाण्डारिमाधवशास्त्रिणा च प्रभाटिप्पण्या सन्देहस्थलानि न्यपाकृतानि। एतावतैव विदुषां चेतसि नाभवत् सन्तोषः, अतो मध्यकौमुदीमाश्रित्यापि मध्यमनोरमा मण्डिता। सिद्धान्तकौमुद्याः टीकासु ज्ञानेन्द्रसरस्वती कृता तत्त्वबोधिनी, मनोरमामाश्रयते। वासुदेदीक्षितकृता बालमनोरमा च नागेशमनुसरति।

भट्टोजिदीक्षितानन्तरं व्याकरणाध्ययनेऽध्यापने च काचिन्नवीनता अभिलक्षिताऽभवत्। तस्याः प्रवर्तको नागेशभट्टः शेखरद्वयं पुरस्कृत्य वैयाकरणसमाजे मण्डितोऽभवत्। परिष्कारपद्धतेः प्रवर्तको नागेशः नव्यन्यायसरणिमनुसृत्य कोटिप्रकोटिविस्तारेण शास्त्रार्थपद्धतिमवातारयत्। नागेशेन प्रकाण्डविदुषा सर्वपरिभाषावृत्त्यतिशायी परिभाषेन्दुशेखरो ग्रन्थो विरचितः। पूर्वपरिभाषाग्रन्थेभ्यः भिन्नोऽयं ग्रन्थः लक्ष्यसिद्ध्यनुसारी परिभाषाक्रम इह समाश्रितः तेन विदुषा। नागेशस्यान्येषु ग्रन्थेषु सिद्धान्त-लघु मञ्जूषे सुविदिते। तयोः प्रसिद्धिः व्याकरण-सिद्धान्तान् तात्विकविचारांश्चाभिलक्ष्य वर्तते। परिभाषेन्दुशेखरस्यापि विभिन्नासु व्याख्यासु पायगुण्डेवैद्यनाथेन गदानाम्नी व्याख्या ख्यापिता। पं. यागेश्वर-ओझामहोदयेन परिभाषेन्दुशेखरस्य हेमवती व्याख्या व्यरचि। तत्र विशेषतो परिभाषाणां विषये युक्तायुक्तत्वविवेचनं विद्यते अन्येषु व्याख्यातृषु पं. तात्याशास्त्रि-जयदेव मिश्रयोः प्रसिद्धिः सुविदिता। कौमुदीव्याख्यासु च नागेशेन स्वाभिप्रायपरौ बृहल्लघुशेखरौ मण्डितौ। एतयोरपि बहवो व्याख्यातारोऽभवन्। तेषु भावग्राहकपरो भैरव मिश्रः चन्द्रकलया शेखरमलङ्कृतवान्। नागेशस्य शिष्येण पायगुण्डेवैद्यनाथेन लघुशब्देन्दु

शेखरस्य चिदस्थिमाला व्याख्या विलिखिता। अव्ययीभावान्तभागे पठन-पाठनसौकर्याय परिष्कार पूरिता दीपकव्याख्यया प्रदीपितः शेखरः पं. नित्यानन्दपन्तमहोदयेन।[1] दण्डिभट्टादिभिश्च विद्वद्भिः प्रकरणविशेषेषु क्रोडपत्राणि विरचितानि प्रचारितानि च। नागेशेन मञ्जूषाग्रन्थानां सङ्क्षिप्तं संस्करणं परमलघुमञ्जूषेति नाम्ना विरचय्य सुप्रकाशितम्। नागेशस्य महनीयो ग्रन्थः महाभाष्यस्य कैयटप्रणीतप्रदीपव्याख्यायाः उद्योतटीका वर्तते।

नागेशानन्तरं ग्रन्थानां पठने पाठने च ये वैयाकरणा महामहिमशालिनः सञ्जाताः, तेषु सर्वाग्रगण्यो गङ्गारामशास्त्री पर्वतीयः व्यराजत। तेन प्रचलितायां शिष्यपरम्परायां क्रमशः पं. जगन्नाथशास्त्रिगाडगिलः, पं. काशीनाथ शास्त्री, पं. राजारामशास्त्रिकार्लेकरः, पं. बालशास्त्रिरानडे, पं. ओझा यागेश्वर शर्मा चेत्यादयः शब्दानुशासनपारावारपारङ्गताः विद्वांसः समभवन्। अस्यां परम्परायामेव बालसरस्वतीति प्रथितस्य रानडेमहोदयस्य वेदसङ्ख्यावन्तोऽपि श्रीमन्तो गङ्गाधरशास्त्रि (वि.सं. १९१०-१९१०) शिवकुमारशास्त्रि (वि. सं. १९०४-१९७५) दामोदरशास्त्रि (वि.सं. १९०४-१९६६) तात्याऽपरनामधेयरामकृष्णशास्त्रिणः (वि.सं. १९०२-१९७६) सङ्ख्यावन्तः समभूवन्। एभिर्विद्वद्भिः व्याकरणशास्त्रमधिकृत्य नूतनपरिष्कारयुता शास्त्रार्थप्रणाली या विस्तारिता सा एषां शिष्यैः प्रशिष्यैश्च परां कोटि-मधिरूढाऽभवत्। तेषु पं. नित्यानन्दपन्तपर्वतीयः, पं. रामभवनोपाध्यायः, पं. गणपति शास्त्रिमोकाटे, पं. सभापति शर्मोपाध्यायः, पं. देवनारायणस्त्रिपाठी, पं. बच्चाझा, पं. जयदेवमिश्रः, पं. रामाज्ञा पाण्डेयः, पं. रघुनाथ शर्मा, पं. सीताराम शास्त्रिशेण्डे, श्री माधवशस्त्रि भाण्डारी, पं. गोपालशास्त्रिनेने चेति वैयाकरणा विख्याता अभवन्। सर्वैरेवैभिः प्रायशो शब्देन्दुशेखर-परिभाषेन्दुशेखर-भूषणसार- मनोरमा-मञ्जूषा प्रभृतिग्रन्थानाश्रित्य व्याख्याः विरचिताः, एषामेव शिष्यपरम्परा अद्यावधि सर्वत्र भारतेदेशे व्याकरणाध्यापने संलग्ना दृश्यते।

## अक्षरम् शब्दतत्त्वम्

षट्सु वेदाङ्गेषु पाणिनीयं व्याकरणमनितरसाधारणं महिमानमावहति। तत्र हेतुः सर्वन्यायबीजनिबन्धनं महाभाष्यमस्ति। भाष्यकारेण शब्दानुशासनं नाम शास्त्रं विस्तीर्णम्। तथा च स्वयमेव पतञ्जलिना महाभाष्यस्य प्रारम्भे एवं शब्दार्थसम्बन्धयोर्विचारे तयोः नित्यत्वं प्रतिपादयता 'सिद्धेशब्दार्थसम्बन्धे' इति प्रथमं वार्तिकं प्रख्यापितम्। तत्र सिद्धशब्दस्य नित्यार्थकत्वं स्पष्टीकृतम्। एतदनुसृत्य भर्तृहरिणा वाक्यपदीये सर्वारम्भे एव "शब्दतत्त्वं यदक्षरम्" इति वदता शब्दनित्यत्वं सुस्थापितम्। अग्रे च ब्रह्मकाण्डे एव भर्तृहरिः "व्याकरणागमस्य मूलप्रवर्तको सूत्रकारः पाणिनिरेवेत्यमन्यत। तथा च मुनित्रयमेव व्याकरणदर्शनस्य त्रयीवद् विचारका

---

१. श्रीराजाराम शास्त्रिप्रभृतिगुरुवरैर्वैदुषीशब्दशास्त्रे याऽपूर्वाऽऽविष्कृतासीदथ च निपुणता धर्मशास्त्रे च यादृक्। सा नित्यानन्द विद्वन्निकषमुपगता सम्प्रदायक्रमेण सम्प्रत्यग्रे न पश्यत्यपरमभिमतं संश्रयं कञ्चिदेषा।। मा.म. पं. नारायणशास्त्रिखिस्ते, ...उच्चरितपञ्चकम् (द्वितीय संस्करण, प १. ३०)

अभवन्निति नात्र सन्देहावसरः। अस्यां परम्परायां भर्तृहरिः नायकः सम्बभूव। तस्य ग्रन्थराशिः वाक्यपदीयं त्रिषु काण्डेषु विभक्तम्। तत्र तावत् शब्दब्रह्मणो विचारे पश्यन्तीमध्यमावैखरीणां व्याकरणविषयत्वं प्रतिपादयता महाभाष्योक्तिः वाग्रूपतया व्याख्याता। व्याख्यानस्य एतादृशी परम्परा भर्तृहरेः पूर्वमप्यासीदिति दृढं वक्तुं शक्यते। तत्र च परायाः सम्बन्धे वाक्यपदीये 'साऽनपायिनीति वदता अविश्लिष्टत्वं स्वीकृतम्। अतो वाचः पराख्ये भेदे सायणादिभिः विचारं कुर्वताऽपि तस्याः अविश्लिष्टत्वात् भर्तृहरिः 'त्रय्या वाचः परं पदम्' इति प्राह। अग्रे नागेशादिभिर्वैयाकरणैः तन्त्रशास्त्रोक्तं नादबिन्दुवादिस्वरूपं वर्णयद्भिः वाचः चतुष्ट्वं चर्चितम् किन्तु तत् भर्तृहर्यादिभिः पूर्वैः व्याकरणदर्शनप्रतिपादकैः वैयाकरणैः नोदाहृतम्। वाक्यपदीयस्य व्याख्यातारौ हेलाराजपुण्यराजौ विख्यातौ समभूताम्। भर्तृहरेः शब्दब्रह्मवादस्य उपजीव्य अद्वैतसिद्धान्त एवं। तमेवावलम्ब्य मण्डनमिश्रेण ब्रह्मसिद्धी रचितेति केषाञ्चिन्मतम्। परापश्यन्त्योस्तादात्म्यसम्बन्धे भर्तृहरेस्तदनुवर्तिनाञ्च शब्दब्रह्मवादिदर्शनिकानां मतानुसारं परात्वेन व्यवह्रियमाणा पश्यन्ती वागेव शब्दब्रह्मरूपा इति सोमानन्दस्य तच्छिष्यस्योत्पलाचार्यस्य च वचनैर्ज्ञायते। शब्दब्रह्मवादस्य आधारभूतो व्याडेः संग्रहग्रन्थ एव। अन्यैश्च मण्डनमिश्र-जयन्तभट्ट-शान्तरक्षितादिभिः मीमांसकैः स्वकीय सिद्धान्तदिशा शब्दब्रह्मविचारः कृतः। शङ्कराचार्येण तत्र किञ्चिद् वैषम्यं प्रदर्शितम्। अस्मिन् विषये पाणिनीयं व्याकरणं सर्वशास्त्रपारिषदमिति सिद्धान्तः सर्वमान्यः। परम्पराप्राप्तं व्याकरणदर्शनं त्रिपथगेव वाक्यपदीये त्रिभिः काण्डैर्विभक्तम्। अस्यामेव परम्परायां कैयटेन महाभाष्यप्रवेशाय प्रदीपस्यमाध्यमेन व्याकरणसिद्धान्तदीपिका वाक्यपदीययोः सेतुत्वं साधितम्। तदनन्तरं सेतुमेतमाश्रित्य भट्टोजिदीक्षितेन शब्दकौस्तुभे नवीना सरणिः प्रदर्शिता। तत्र न्यायमीमांसादिमतान्यालोच्य व्याकरणदर्शनमार्गः प्रदर्शितः। श्रीविश्वेश्वरसूरिणा च व्याकरणसिद्धान्तसुधानिधौ न्यायादिदर्शनदृष्टिभेदं प्रदर्शयता व्याकरणदर्शनसिद्धान्ताश्च प्रतिपादिताः। तथैव च कौण्डभट्टेन वैयाकरणभूषणसारे शब्दकौस्तुभदिशा धात्वर्थ-लकारार्थ-सुबर्थ-नामार्थ-समासशक्ति-शक्ति-नञर्थ- निपातार्थ- स्फोटादिनिर्णयाय प्रयासो विहितः। अग्रे च नागशभट्टेन मञ्जूषाशेखरादौ किमपि अनितरसाधारणं व्याकरणदर्शनस्वरूपं निदर्शितम्। स्वगुरोः नागेशस्य विवेच्यविषयाः वैद्यनाथपायगुण्डेमहाशयेन स्वविरचितटीकाग्रन्थेषु समाहिताः। भर्तृहरेः आधुनिक-व्याख्यातृषु पं. रघुनाथ शर्मा उल्लेखनीयो वर्तते। तेन विरचितायां व्याख्यायामम्बाकर्तृयां सम्प्रदायानुसरणे सत्यपि स्वातन्त्रयम् वर्तते। तथैव च टीकाकारेण स्वयमेव "हरिवृषभवचः पयोधिमग्नं निखिलं वाक्यपदीयरत्नजालम्" इति कथनेन तत् स्वातन्त्र्यं प्रख्यापितम्। शब्दसृष्टिक्रमे च श्रीरामाज्ञापाण्डेयेन व्याकरणदर्शननामके ग्रन्थे पाणिनीययाकरणसिद्धान्तानवलब्य प्रयत्नः समनुष्ठितः। तत्र विशेषतः परिणामविवर्तवादौ निरूपितौ।

शब्दशक्तीनां विचारे पूर्वाचार्याः वैयाकरणाः अग्रेसराः। तासु शक्तिसु लक्षणाव्यञ्जने विशेषतो वैयाकरणैरेव प्रकाशिते। तास्तिस्रः शक्तयो न्यायमीमांसादिशास्त्राचार्यैरपि विचारिताः।

तासां विचारे प्रवर्तमानासु जगदीशभट्टाचार्यकृता शब्दशक्तिप्रकाशिका प्राधान्यं लभते। अयमेव ग्रन्थः वैयाकरणैः विशेषतः शब्दशक्तिविचारे प्राधान्येनोपस्थाप्य व्याकरणदृष्ट्या विशदीक्रियते। अनेन सह पदपदार्थविचारेऽपि व्युत्पत्तिवाद-शक्तिवादौ गदाधरभट्टाचार्यप्रणीतौ व्याकरणग्रन्थाविति मत्वा पठन-पाठनेऽङ्गीभूतौ। शास्त्रार्थे विशेषतो व्युत्पत्तिवादः प्रचलितोऽपि परीक्षकाणां कृते शास्त्रसामञ्जस्यमनुभावयते। विशेषतः कारकविचारे एवास्य ग्रन्थस्य महिमा विद्यते। अन्ये च पदपदार्थसम्बन्धे नैयायिकैः ग्रन्था विरचितास्तथाऽपि तेषां प्रचारः परीक्षादृष्ट्या न वर्तते। व्युत्पत्तिवादस्य द्वे व्याख्याने पं बच्चाझा-पं. जयदेव मिश्राभ्यां विरचिते स्तः, ते द्वे एव पण्डितसमाजेऽधुना मान्ये विद्येते। शक्तिवादस्यापि सरलं व्याख्यानं गोस्वामिदामोदरलालमहोदयैः कृतम् अध्येतृभिः उररीक्रियते। पठन-पाठने सारल्यमनुभूयमानत्वाद् पं. सुदर्शनाचार्यस्य व्युत्पत्तिवादव्याख्या विद्वद्भिः छात्रैश्च अङ्गीकृता।

वर्तमानसन्दर्भे व्याकरणाध्ययनेऽध्यापने च कश्चित् दृष्टिभेदोऽभिलक्ष्यते। प्रक्रियांशे औदासीन्यं माभवत्विति मत्वा विरजानन्ददयानन्दस्वामिप्रभृतिभिः आर्यसमाजप्रवर्तकैरपि पाणिनीयाष्टकमभिलक्ष्य तद्व्याख्यानेन सह उदाहरणादीनां प्रतिपादनं देववाण्या हिन्दीभाषया च सह कृतमस्ति। तयोरेव प्रेरणया पं. ब्रह्मदत्तजिज्ञासुना समग्राष्टाध्यायी तथैव विस्तारिता। विस्तारव्याजेनैव प्रासङ्गिकाः सिद्धान्तविशेषाश्चापि निवेशिता विद्यन्ते। अस्यां परम्परायां पं. युधिष्ठिर मीमांसकः विशेषत उल्लेखनीयोऽस्ति! यस्य जीवनं व्याकरणविद्यायामेव विलसितम्। पठनं, पाठनं ग्रन्थविरचनं, ग्रन्थप्रकाशनं चेति जीवनमस्य महोदयस्य। व्याकरण शास्त्रस्येतिहासोऽपि विलिख्य इतिहासाध्येतॄणां कृते प्रवेशद्वारमनावृतकपाटम् कृतम्। राष्ट्रपतिसम्माननं विश्वभारती पुरस्कारश्चेति विविधैः सम्मानैः अलङ्कृतोऽयं महापुरुष आसीत्। आङ्ग्लशासकानां शासनेन सहैव संस्कृताध्ययनेऽध्यापने च वैदेशिकानां चेतसि संस्कृताध्ययनचिन्ता विचकास। अभिज्ञानशाकुन्तलमेव संस्कृतभाषा संस्कृताभिज्ञानं समभवत्। क्रमशो महानगरेषु विद्यालयेषु विश्वविद्यालयेषु च आगत्याधीत्य कोलब्रूक बोथ लिंक कीलहार्न प्रभृतयो विद्वांसः व्याकरणेऽपि विख्याता अभवन्। अन्येष्वपि च मैक्समूलर-मैक्डोनल-कीथ-वेबर-पीटरसन-विटरनिट्स गोल्डस्टूकर प्रभृतयोऽपि प्रख्याता आसन्। कीलहार्न गोल्डस्टूकर-लुई-रेनु-मैक्डोनल मैक्समूलर प्रभृतिभिश्च विशेषतो व्याकरणग्रन्थेषु व्याख्या विहिताः। तेषामेव प्रसादात् विदेशेषु संस्कृतस्य ज्ञानं प्रसृतमभूत्। भारतीयेष्वपि आङ्ग्ल भाषा प्रावीण्येन व्याकरणग्रन्थान् अवबोधयितुमौत्सुक्यं सञ्जातम्। तेन निबन्धादीनां माध्यमेन स्वातन्त्रेण च अनेकैर्विद्वद्भिः ग्रन्था विरचिताः तेषु डॉ. रामकृष्ण भण्डारकर श्रीशचन्द्रवसु-श्री. एम. आर-काले. श्री वी.एस आप्टे प्रमुखैः स्वकीया ग्रन्था उपस्थापिताः। एतेष्वपि वसुमहोदयस्य सिद्धान्तकौमुदी अष्टाध्यायी चेत्युभयस्य महनीयं स्थानं विद्यते। अनन्तरञ्च स्वातन्त्र्यप्राप्तौ हिन्दीभाषामाध्यमेन महनीयानां ग्रन्थानां व्याख्याप्रणयनं च सातत्येनावलोक्यते। भाविनि कालेऽपि सैषा धारा व्याकरणस्यागाधतां प्रतिष्ठापने समर्था भवेदिति। व्याकरणे इतिहासग्रन्थानां विरचने प्रथमं तावत् वैदेशिका एव

प्रवृत्ताः।ताननुसरन्तो भारतीया विद्वान्सः प्रवृत्ता अभवन्। तेषु डॉ. एस. के. बेल्वेल्करो वर्तते। तस्य कृति आङ्ग्लभाषायां विद्यते। अनन्तरमपि किञ्चित्कालपर्यन्तम् जनास्तमेवानुसरन्त आसन्। डॉ. क्षितीशचन्द्र चक्रवर्ती डॉ. प्रभात चन्द्र चक्रवर्ती डॉ. टी. आर. चिंतामणि प्रभृतयः इतिहास लेखने प्रावर्तन्त। हिन्दीभाषायां तु समग्रो व्याकरणेतिहासः पं. युधिष्ठिर मीमांसक महोदयै : अवतारितो वर्तते। तदतिरिक्तम् पद्मभूषण पं. बलदेवोपाध्याय विरचिते संस्कृत शास्त्रेतिहासे व्याकरणपरिच्छेदे सप्तसु खण्डेषु पाणिनिपूर्वत आरभ्य वर्तमानशतकपर्यन्तं क्रमबद्धः इतिहासः विस्तरेण प्रमाणोपन्यासपूर्वकं विवेचितः। तामेव सरणिमनुसृत्य अस्मिन् खण्डेऽपि व्याकरणेतिहासस्य क्रमिकत्वं प्रतिपादितम्। विशेषतः पूज्यैः उपाध्याय महोदयैः प्रणीतायां काशिकपाण्डित्यपरम्परायां महता विस्तरेण काशीस्थानां वैयाकरणानामवदानं समारोपितम्। अस्यामेव पद्धतौ डॉ. वासुदेव शरण अग्रवाल-डॉ. प्रभुदयाल अग्निहोत्री-डॉ. राम शङ्कर भट्टाचार्य प्रभृतिभिः पाणिनिपतञ्जल्योः विशेषतोऽध्ययनं सम्पाद्य स्वकीयाः ग्रन्था : हिन्दी भाषायामेवोपनिबद्धाः वर्तन्ते। तथैव च महाराष्ट्रभाषायां म.म. पं. काशीनाथ वासुदेवाभ्यङ्कर महाभागेन स्वपितुः म.म. पं. वासुदेव शास्त्रिणा कृतस्य महाभाष्यव्याख्यानस्य विस्तृतभूमिकायां व्याकरणशास्त्रेतिहाससमष्टिः संगुम्फिता। वृहदाकारमयेषु ४०८ पृष्ठेषु समष्टिरियं समायोजिता इति हर्षस्य विषयः। अनेनैव महाभागेन व्याकरणग्रन्थानां ग्रन्थकाराणाञ्च विषय सूची निर्मिता।

पाणिनीयं व्याकरणमेव देशेऽस्मिन् भारते वर्षे प्रचलितं प्रसारितं नाभूत् किन्तु सम्प्रदायविशेषानभिलक्ष्य तदितरव्याकरणान्यपि समये-समये बहुभिराचार्यैरूपनिबद्धानि। तत्र कारणं तु लौकिकसंस्कृतभाषाया वैचित्र्यम् तेषां-तेषां शब्दानां साधुत्वप्रतिपादनमेव। तेषु विद्वत्सु केचित् पाणिनितः पूर्वमपि आसन्। किन्तु इन्द्रः आपिशलः शाकल्यः शाकटायनश्च पाणिनिना प्रसङ्गेन उपात्ता : अन्ये चापि ये केचित् पाणिनेः पूर्वं विशिष्टा मान्याश्चासन् तेऽपि अष्टाध्याय्यां स्मारिता :। तथापि तादृशा "वैयाकरणा : अन्ये च विद्यन्ते, ये पाणिनेः पूर्वमपि तथा परमपि व्याकरणशास्त्रप्रवर्तका अविद्यन्त, तेषां कीर्तनमप्यावश्यकम्। एतेषां नाम-सङ्कीर्तनेन रचनाभिश्चैव वयं सन्तोषमनुभवामः। ऐन्द्रव्याकरणसम्बन्धे पूर्वम् उल्लेखितमेव। शर्ववर्माख्येन विदुषा कातन्त्रव्याकरणं प्रणीतम्। कातन्त्रस्य कद्भागो वररूचिभावित इति ज्ञायते दौर्गव्याख्यया। स च वार्तिककाराद् भिन्नः। कथासरित्सागरानुसारं सातवाहनस्य राजसंसदि गुणाढ्यशर्ववर्माणौ बुधवरावास्ताम्। कातन्त्रव्याकरणं न केवलं कालक्रमानुसारं प्रथममस्ति, प्रत्युत सरलतयाऽपि प्राथम्यं भजते। कातन्त्रादीनि व्याकरणान्यपि विभाजने पाणिन्यष्टकमनुसरन्ति तेषु कातन्त्रतन्त्रे चत्वारोऽध्यायाः समाहिताः। तेषु अध्यायेषु पाणिन्यनुसारं प्रक्रियाव्याख्यानादिकं सकलं शब्दजालमवगुण्ठितम् कालक्रमानुसारेण संस्कृत भाषायाः काठिन्यमपाकर्तुं लाघवमनुभूयमानश्चन्द्रगोमी चान्द्रं व्याकरणं विरचय्य शब्दाकाशं व्यद्योतत। अस्य अध्यायाष्टकमेव लौकिकशब्दानुशासनमभिलक्ष्य विलसतीति प्रवादः। अध्यायद्वयं वैदिकशब्दानां

दिग्दर्शनार्थं विरचितं स्यादिति कल्प्येत। अस्मिन्नेव क्रमे पाल्यकीर्तिरित्यपर नामधेयः शाकटायनः स्वोपज्ञया अमोघावृत्या सहितं व्याकरणं प्रणीतवान्। इदं व्याकरणमपि पाणिनिव्याकरणसदृशं सर्वाङ्गपूर्णम् आसीत्। नामभिन्नेष्वपि एतेषु व्याकरणेषु पाणिनेश्छाया सर्वत्र विद्यमाना वर्तते। तथैव च देवनन्दिप्रणीते जैनेन्द्रव्याकरणेऽपि पाणिनेः प्रभावः प्रभूततया परिलक्ष्यते। किन्तु जैनधर्मावलम्बनतया देवनन्दिना स्वरवैदिकप्रकरणयोर्विस्तारो नापेक्षितः। किं बहुना सिद्धहेमशब्दानुशासने हेमचन्द्रः सरस्वतीकण्ठाभरणरीत्या प्रभावितः स्पष्टतया परिदृश्यते। व्याकरणामिदं हेमचन्द्रप्रणीतया स्वोपज्ञवृत्या मण्डितं साङ्गोपाङ्गं संस्कृतप्राकृतोभय भाषयोः शब्दानुशासने वैशिष्ट्यं भजते। एतदतिरिक्तम् अनुभूतिस्वरूपाचार्यप्रणीतं सारस्वतं व्याकरणं, वोपदेवप्रणीतं मुग्धबोधव्याकरणं, रुपगोस्वामिप्रणीतं हरि-नामामृतं व्याकरणं, जुमरनन्दिप्रणीतं जौमरव्याकरणञ्चेति विविधानि व्याकरणानि विरचितान्यभूवन्। सर्वाण्येतानि व्याकरणानि बालानां बोधायैव विरचितानि। देववाण्याः प्रचारदृष्ट्यैव, शोद्भवो परमाखं भोजराजोऽपि सरस्वतीकण्ठाभरणं भाषाविदां कण्ठे माले व अर्पितवान्। इदं कण्ठाभरणमष्टपुष्पैरुपवृंहिप वर्तते।

सर्वमेतत् सङ्गमय्य सम्प्रति उत्तर प्रदेश संस्कृत संस्थानेन प्रकाशनार्थं संकल्पितस्य 'संस्कृत साहित्य का वृहद् इतिहास' इत्याख्यस्य अष्टादशखण्डात्मकवृहद्ग्रन्थस्य व्याकरण खण्डः विदुषां समक्षमुपस्थाप्यते। अस्य सम्पादने मम प्रवृत्तिः गुरुवराणामुपाध्याय महोदया नाम् आदेशानुसारमजायत। तैःस्वीकृता सरणिरेव मयानुसृता, केवलं ग्रन्थानां ग्रन्थकाराणाञ्च नामोल्लेखनेनैवेतिहासस्य लक्ष्यं न सिद्ध्यति, अपितु पूर्वापरसम्बन्धमभिलक्ष्य विवेचनमप्य पेक्षते। दृष्टिमान्द्येन कार्यसम्पादने कष्टमनुभवन्नपि गुरुकृपयेदं कार्यं निर्विघ्नं समाप्ति मगमत्। 'गच्छतः स्खलनं वापि भवत्येव प्रमादत' इत्युक्तिमनुसरन्त : गुणैकदर्शिनो विद्वांसः दोषदृष्टिपरं मनो न विधाय मम परिश्रमं च सफलं विभावयिष्यन्तीति।

के. २३/८ दूधविनायक, वाराणसी
गुरुपूर्णिमा, सं. २०५५

विदुषां वशंवदः
**गोपालदत्तपाण्डेयः**

# प्रस्तावना

विश्व साहित्य के इतिहास में संस्कृत भाषा की प्राचीनता सर्वमान्य है। संस्कृत भाषा का मूल उद्गम वैदिक संहितायें हैं। इस सिद्धान्त के अनुसार संस्कृत व्याकरण के आदिम स्रोत का स्वरूप जानने के लिये वैदिक भाषा और वैदिक व्याकरण की मूल प्रकृति का सिंहावलोकन परमावश्यक है। लौकिक संस्कृत के प्रचार तथा प्रसार के साथ संस्कृत भाषा को अभिलक्षित कर लोक में व्याकरण शास्त्र का उद्गम तथा विकास अनेक शताब्दियों पूर्व होता रहा।

व्याकरण की रचना में भाषा मूल कारण है, क्योंकि भाषा ही मानव मात्र के भावों और विचारों के पारस्परिक आदान-प्रदान का सर्वोत्तम साधन है। भाषा के माध्यम से ही मनुष्य अपने विचारों को दूसरों तक पहुँचाता है और दूसरों के विचारों को ग्रहण करता है। मनुष्य में भाषण शक्ति ईश्वरीय देन है। इस सम्बन्ध में आचार्य दण्डी का यह कथन है कि वाणी के बिना संसार का काम नहीं चल सकता–यदि शब्द नामक ज्योति संसार को प्रकाशित न करती तो यह सारा संसार अविद्या के अंधकार से व्याप्त रहता।

**इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।** (काव्यादर्श १/३-४)

भाषा का अर्थ है व्यक्त वाणी, अर्थात् जिसमें वर्णों का स्पष्ट उच्चारण होता है। उच्चारण में व्यक्तिगत विषमता तथा उच्चारण स्थानगत त्रुतियाँ होने के फलस्वरुप शब्दों के बाह्यस्वरुप में विभेद होना भी स्वाभाविक है, जो शब्दों के वास्तविक अर्थ को अभिलक्षित करने में असमर्थ हो जाते हैं। अतः व्याकरण शब्द अपने में सर्वथा सार्थक है–'व्याक्रियन्ते विविच्यन्ते प्रकृतिप्रत्ययादयो यत्र तद् व्याकरणम्' अतः भारतीय परम्परा में प्रत्येक विषय का सम्बन्ध वेदों से ही जोड़ने का प्रयत्न किया गया है।

वेदाङ्ग नामकरण से यह स्पष्ट हो जाता है कि शिक्षा, कल्प, छन्द, निरुक्त, व्याकरण तथा ज्योतिष इन छहों अङ्गों की पृथक रुप में मान्यता वेदों के संहिता-रुप में निबद्ध होने तथा उनकी स्वाध्याय प्रवृत्ति के बाद ही संभव हुई हो। वैदिक चिन्तन के साथ ही अर्थानुसन्धान के लिए शब्दों के विश्लेषण का आविर्भाव स्वाभाविक था। इसी विश्लेषण के फलस्वरुप वेद-पुरुष के इस अङ्ग का नाम 'व्याकरण' रखा गया तथा छहों अङ्गों में इसकी प्रधानता भी स्वीकार की गई–मुखं व्याकरणं स्मृतम्। उपर्युक्त छहों वेदाङ्गों में से 'शिक्षा' और 'निरुक्त' में उल्लिखित अनेक बातें विशुद्ध रूप से वर्तमान काल के प्रचलित व्याकरण के क्षेत्र में आती है। शिक्षा और निरुक्त–इन दोनों वेदाङ्गों के जो ग्रन्थ आजकल उपलब्ध हैं उनमें बहुत से वचन ऐसे विद्यमान हैं, जिन्हें हम पाणिनीय व्याकरण से अभिन्न

और समान रूप में पाते हैं। इस प्रकार व्याकरण, शिक्षा और निरूक्त ये तीनों परस्पर सम्बद्ध हैं, शिक्षा और निरूक्त एक तरह से व्याकरण के पूरक अङ्ग हैं। शेष तीनों वेदाङ्गों का सम्बन्ध वेदों से अवश्य है, व्याकरण से नहीं। इस दृष्टि से भर्तृहरि ने भी छहों अङ्गों में व्याकरण को सर्वप्रथम और सर्वप्रधान अङ्ग माना है–**'प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः।'**

## प्रातिशाख्य

वैदिक साहित्य की विभिन्न शाखाओं से सम्बद्ध शब्दों का अन्वाख्यान प्रातिशाख्यों में मिलता है। इनका वेदों से घनिष्ठ सम्बन्ध है। वेद की शाखाओं से सम्बद्ध होने के कारण इनका नाम प्रातिशाख्य रखा गया। प्रातिशाख्यों में वेद की विभिन्न शाखाओं से सम्बद्ध व्याकरण के नियम दिये गए हैं। इनमें वर्णोच्चारण–शिक्षा, संहिता का पद पाठ में परिवर्तन, सन्धि ज्ञान, स्वरविधान, पदों का विभाजन, स्वर संचार आदि विषयों का विवेचन किया गया है। इसके अतिरिक्त प्रातिशाख्यों में व्याकरण के पारिभाषिक शब्द भी मिलते हैं, जिन्हें परवर्ती वैयाकरणों ने उसी रूप में ग्रहण किया है। प्रातिशाख्यों में 'ऋक्प्रातिशाख्य' सबसे प्राचीन माना गया है। अनेक शाखाओं के नाम पर वाजसनेय-प्रातिशाख्य, साम-प्रातिशाख्य, तैत्तिरीय-प्रातिशाख्य, मैत्रायणीय-प्रातिशाख्य, अथर्व-प्रातिशाख्य आदि सुप्रसिद्ध हैं।

प्रातिशाख्यों से पूर्व भी ब्राह्मण ग्रन्थों में व्याकरण सम्बन्धी अनेक संकेत मिलते हैं जिससे यह विदित होता है कि 'व्याकरण' शास्त्र की पर्याप्त चर्चा उस युग में होती रही हो। यद्यपि 'गोपथ ब्राह्मण' में–धातु, प्रातिपदिक, आख्यात, लिङ्ग, वचन, विभक्ति, स्वर, उपसर्ग, निपात, वर्ण, अक्षर, पद, संयोग आदि पारिभाषिक शब्द विद्यमान हैं तथा मैत्रायणी संहिता में भी छः विभक्तियों का उल्लेख मिलता है एवं ऐतरेय ब्राह्मण में वाणी की सात विभक्तियों की ओर निर्देश किया गया है–फिर भी इन ग्रन्थों को व्याकरण की संज्ञा नहीं दी जा सकती क्योंकि इन ग्रन्थों का उद्देश्य व्याकरण का निर्वचन करना नहीं है। इस प्रकार का वर्णन प्रासङ्गिक रूप में जिज्ञासा मात्र है। आगे चलकर प्रातिशाख्यों ने इस कार्य को पूरा किया तथा उन्हें ही व्याकरण का प्रारम्भिक रूप समझना चाहिए। प्रातिशाख्यों के रूप में वैदिक काल में व्याकरण शास्त्र के उदय और विकास का यह परिणाम हुआ कि परवर्ती व्याकरण-ग्रन्थों के रचयिताओं को प्रातिशाख्यों से उपयुक्त सामग्री मिली। विशेषतः पाणिनि ने अपनी अष्टाध्यायी में वाजसनेयी प्रातिशाख्य से उपधा, उदात्त, अनुदात्त, स्वरित, आम्रेडित आदि पारिभाषिक शब्दों को उसी रूप में ग्रहण कर लिया तथा कई सूत्रों को भी कुछ परिवर्तन के साथ संगृहीत किया।

## यास्क

शाब्दिक प्रक्रिया की निष्पत्ति करने में 'निरूक्त' अधिक उपयोगी है। अन्य वेदाङ्गों में निरूक्त के अतिरिक्त यद्यपि 'शिक्षा' व्याकरण के साथ साम्य रखती है तथापि उसका उपयोग केवल उच्चारण सम्बन्धी नियमों तक ही सीमित है। यास्क ने भी शब्दों के चार भेद-नाम, आख्यात, उपसर्ग और निपात-प्रातिशाख्य के अनुसार ही स्वीकार किए हैं। यह चार भेद शाब्दिक प्रक्रिया के एक प्रकार से मेरुदण्ड हैं। आगे के वैयाकरणों ने भी इन भेदों को स्वीकार कर व्याकरण का स्वरूप सुदृढ़ किया है। भाषा वैज्ञानिक विद्वान् तो यास्क को भाषा विज्ञान का आदिम गुरु मानते हैं। वह पाणिनि के पूर्ववर्ती विचारकों में सर्वाग्रणी रहे। इस प्रकार लौकिक संस्कृत व्याकरण की पूर्व पीठिका पाणिनि से पूर्व ही तैयार हो चुकी थी। महाभारत के शान्तिपर्व में भी (अ. ३८२) यास्क के निरुक्तकार होने का स्पष्ट निर्देश है। अतः यास्क पाणिनि से कई शताब्दियों पूर्व विद्यमान रहे हों। व्याकरण का यह उदयकाल इस शास्त्र के इतिहास में अत्यन्त महत्वपूर्ण है। यह इस शास्त्र का सृजनात्मक युग था, जिसमें पाणिनि, कात्यायन तथा पतञ्जलि ने अपनी रचनाओं द्वारा व्याकरण के मौलिक तथ्यों का निर्वचन प्रस्तुत किया। व्याकरण शास्त्र में महर्षि पाणिनि, कात्यायन तथा पतञ्जलि की प्रधानता ने वर्तमान काल में प्रचलित संस्कृत व्याकरण को प्रौढ़ता के शिखर पर पहुँचा दिया।

## पाणिनि पूर्ववर्ती वैयाकरण

पाणिनि के पूर्व व्याकरण के अनेक रचयिता हो चुके थे, जिनके सम्बन्ध में विदित कराना परमावश्यक है। अन्यथा उन प्राचीन वैयाकरणों तथा पाणिनि आदि प्रसिद्ध वैयाकरणों की श्रृंखला के साथ समन्वित करने में कठिनाई उपस्थित होगी। भाषा के प्रवाहित होने के साथ-साथ व्याकरण का अनुगामी होना स्वाभाविक है। इस नियम को पाणिनि ने भी स्वीकार किया है तथा अपने अनेक सूत्रों में उन पूर्ववर्ती वैयाकरणों का आदर के साथ स्मरण किया है। ऐसे वैयाकरणों का अष्टाध्यायी के रचयिता पाणिनि ने अपने इस ग्रन्थ में उल्लेख करते हुए नाम निर्देश भी किया है। संख्या में ये दस स्पष्ट रुप से उल्लिखित हैं- १. आपिशलि, २. काश्यप, ३. गार्ग्य, ४. गालव, ५. चाक्रवर्मण, ६. भारद्वाज, ७. शाकटायन, ८. शाकल्य, ९. सेनक तथा १०. स्फोटायन। इनमें से दो वैयाकरणों का विशेष प्रभाव रहा और यास्क ने भी उनका उल्लेख अपने निरुक्त में किया है। शब्दों की रचना के सम्बन्ध में ये दो वैयाकरण-गार्ग्य और शाकटायन अपने-अपने पृथक् मतों के कारण भाषा विज्ञान के क्षेत्र में आज भी सुविदित हैं। इनमें से गार्ग्य का यह मत था कि केवल वे ही शब्द 'धातुज' माने जा सकते हैं, जिनमें धातु और प्रत्यय स्पष्टतया अभिलक्षित हो सकें। इसके विपरीत शाकटायन ने सभी शब्दों को धातुज माना है। शाकटायन के मत

का ही प्रतिपादन यास्क ने अपने निरुक्त में किया है, जो आगे चलकर सिद्धान्त के रूप में मान्य हुआ। पाणिनि भी इसी मत के पोषक रहे। वर्तमान में इन विद्वानों के द्वारा लिखे गए ग्रन्थ उपलब्ध नहीं हैं। अतः उन ग्रन्थों के सम्बन्ध में निर्वचन करना कठिन ही रहा। प्राचीन विद्वानों की यह धारणा रही है कि इनमें से कुछ विद्वानों ने समग्र व्याकरण-वैदिक तथा लौकिक संस्कृत-को अभिलक्षित कर अपने-अपने ग्रन्थ रचे। शेष विद्वानों ने आंशिक रचना कर उन-उन क्षेत्रों में पूर्ण सफलता प्राप्त की। फिर भी यह कहना कठिन है कि इन सबके ग्रन्थों का स्वरूप किस कारण लुप्त हो गया। पाणिनि ने तो अपने कुछ सूत्रों में इनके मत का उल्लेख कर उन शब्दों का वैकल्पिक प्रचलन होना सूचित किया हैं तथा उन दस विद्वानों का नाम बड़े आदर के साथ लिया है।

इन दस आचार्यों के अतिरिक्त भी अनेक व्याकरण-प्रवक्ता प्रसिद्ध हुए हैं जिनका उल्लेख पाणिनि ने अपनी अष्टाध्यायी में नहीं किया है। ऐसे विद्वानों के मतों का प्रासंगिक उल्लेख वृत्तिकारों, वार्तिककारों, भाष्यकार, प्रक्रिया ग्रन्थों के विस्तारकों तथा उनके व्याख्याकारों ने बड़े आदर के साथ किया है। ऐसे विद्वानों में इन्द्र, काशकृत्सन, पौष्करसादि, भागुरि, माध्यन्दिनि, तथा व्याघ्रपद्य का उल्लेख पाणिनि के उत्तरवर्ती विद्वानों ने विशेष रूप से किया है।

पाणिनि द्वारा अनुल्लिखित आचार्यों में इन्द्र का नाम व्याकरण के प्रथम प्रवक्ता के रूप में आज भी सुविदित है। कवियों ने जिस प्रकार प्रकृति का मानवीकरण किया है उसी प्रकार शास्त्रों के अन्य क्षेत्रों में भी महामानवों को देवों के रूप में प्रसिद्ध कर उनकी रचनाओं पर प्रामाणिकता की मुहर लगा दी है। अतः वृहस्पति, महेश्वर, इन्द्र आदि के नामों से पृथक्-पृथक् व्याकरणों का संकेत मिलता है। इनमें से इन्द्र की महत्ता सर्वमान्य है। महाभाष्यकार ने अपने ग्रन्थ में यह उल्लेख किया है कि वृहस्पतिसदृश गुरु ने इन्द्र को अपना शिष्य बनाया तथा दैवी हजार वर्षों तक शब्द रचना सम्बन्धी उपदेश देते रहे फिर भी शब्दों का आकलन नहीं हो सका। ऋक्तन्त्र के अनुसार भी इन्द्र के प्रथम वैयाकरण होने का उल्लेख मिलता है। तदनुसार इन्द्र ने भरद्वाज को शब्दशास्त्र की शिक्षा दी। यही व्याकरण आगे चलकर ऐन्द्र व्याकरण के नाम से प्रचलित हुआ। यह व्याकरण सम्प्रति प्राप्त नहीं है, किन्तु उत्तरवर्ती व्याकरण ग्रन्थों में इसका उल्लेख मिलता है। कथा सरित्सागर के अनुसार ऐन्द्र व्याकरण प्राचीन समय में ही नष्ट हो गया था। तिब्बतीय ग्रन्थों के अनुसार ऐन्द्र व्याकरण का परिमाण पच्चीस हजार श्लोक था। विस्तार में ऐन्द्र व्याकरण पाणिनीय व्याकरण की अपेक्षा कई गुना अधिक रहा होगा। तमिल भाषा के व्याकरण 'तोलकाप्पियम्' पर ऐन्द्र व्याकरण का बहुत प्रभाव है। इनके अतिरिक्त पाणिनि द्वारा अनुल्लिखित बारह वैयाकरणों में **व्याडि** सुप्रसिद्ध हुए। इनका 'संग्रह' नामक ग्रन्थ लक्ष श्लोकात्मक रहा। व्याडि पाणिनि के सम्बन्धी थे। पाणिनीय व्याकरण पर उनके पूर्ववर्ती आचार्यों का प्रभाव पड़ने के सङ्केत परवर्ती ग्रन्थकारों के उल्लेखों से इङ्गित होते है।

# त्रिमुनि व्याकरण

संस्कृत व्याकरण के इतिहास में आचार्य पाणिनि युगपुरुष के रुप में अवतीर्ण हुए। उन्होंने अतीत का सम्बल लेकर एक ऐसे व्याकरण की रचना की जिसने समकालिक तथा भविष्य में प्रयोग की जाने वाली संस्कृत भाषा का मार्गदर्शन किया, जिसके फलस्वरुप पाणिनीय व्याकरण ही संस्कृत व्याकरण का पर्यायवाची शब्द बन गया। इसका एक मात्र कारण उनकी अष्टध्यायी की विशेषता थी, जिसे एक स्वर से विश्व का सर्वाधिक प्रौढ़ एवं प्रामाणिक व्याकरण ग्रन्थ स्वीकार किया गया। पाणिनि के आविर्भाव के साथ ही उनके पूर्ववर्ती वैयाकरणों का तेज मन्द हो गया और उन प्राचीन वैयाकरणों के ग्रन्थों का धीरे-धीरे लोप होता चला गया।

इस युग में वैदिक और लौकिक संस्कृत के साथ-साथ जन साधारण में प्राकृत भाषा का भी प्रयोग होता रहा। बाद में प्राकृत और लौकिक संस्कृत का अन्तर स्पष्ट करने के लिए 'भाषा' की अपेक्षा संस्कृत नाम रखना उचित समझा गया। वर्तमान काल में भाषा की अनेकरुपता होते हुए भी जनसाधारण में सर्वाधिक प्रचलित खड़ी बोली की तरह उस समय भी संस्कृत की प्रधानता होते हुए भी प्राकृत भाषा का व्यवहार में प्रचलन किसी प्रकार कम नहीं था। इस प्रकार पाणिनि युग में वैदिक संस्कृत, लौकिक संस्कृत तथा प्राकृत भाषाओं की त्रिवेणी समानान्तर रुप में प्रवाहित होते हुए भाषा सम्बन्धी एकरूपता को स्थिरता प्रदान करने में सदा सर्वदा के लिए सार्थक रही। जिसके फलस्वरूप पाणिनि ने अष्टाध्यायी की रचना कर संस्कृत भाषा को व्याकरण के रूप में ऐसी धरोहर प्रदान की, जिससे परवर्ती आचार्यों के लिए शब्द शास्त्र का मार्ग प्रशस्त हो गया तथा उन आचार्यों ने पाणिनि की अष्टाध्यायी को ही आधारभूत ग्रन्थ मानकर इस शास्त्र पर विचार एवं विस्तार करना आरम्भ किया।

अष्टाध्यायी के पठन-पाठन द्वारा संस्कृत व्याकरण का प्रचार एवं प्रसार होने के साथ पाणिनि के समय से ही उस पर व्याडि सदृश महान आचार्यों के द्वारा मार्ग प्रशस्त किये जाने पर भी अनेक आचार्यों को कुछ परिवर्तन एवं परिवर्धन की आवश्यकता प्रतीत होने लगी। इसका एक मात्र कारण था संस्कृत भाषा की व्यापकता एवम् अनेकरूपता। उन महनीय आचार्यों ने न्यूनाधिक भाव से अष्टाध्यायी के नियमों में वैकल्पिक सुझाव रखना प्रारम्भ कर दिया। इस कार्य की पुष्टि आचार्य कात्यायन ने पाणिनि के सूत्रों के साथ ही समानान्तर रूप में उन विकल्पों को 'वार्तिक' के रूप में विद्वानों के समक्ष प्रस्तुत किया। इस प्रस्तुति को जनता के समक्ष विचारार्थ समाकलन करने में लगभग दो सौ वर्ष या उससे अधिक समय लगा होगा। इसके फलस्वरूप कात्यायन ने पाणिनि के अवशिष्ट नियमों को इनमें समेटते हुए अष्टाध्यायी के पूरक रूप में वार्तिक ग्रन्थ को उन्होंने प्रस्तुत किया। यद्यपि

अनेक विदेशी और देशी विद्वानों ने कात्यायन के इस प्रयास में विरोध की भावना भले ही पाई हो किन्तु उसमें शाश्वतिक विरोध की कोई गुंजाइश नहीं थी।

सूत्र और वार्तिकों के समन्वयात्मक दृष्टिकोण ने व्याकरणशस्त्र को अधिक व्यापक बना दिया। इस वैचारिक क्रान्ति ने जटिलता को दूर करने के लिए आगे का मार्ग प्रशस्त किया। इन दोनों आचार्यों–पाणिनि और कात्यायन–के प्रयासों में पारस्परिक समन्वय को समझने के लिए एक अन्तर्दृष्टिसम्पन्न व्यक्ति की आवश्यकता थी उसे शेषावतार पतञ्जलि ने पहचान लिया। पतञ्जलि ने कात्यायन की तीखी पूरक दृष्टि का आशय भी समझा। उन्हें यह भी आभासित हुआ कि कात्यायन के अनेक वार्तिक ऐसे हैं जिनके अस्तित्व के बिना भी पाणिनि के सूत्रों की उपादेयता में कोई न्यूनता नहीं आ सकती। पतञ्जलि कुछ और आगे बढ़े, उन्होने पाणिनि की द्विरूक्तता को भी अपेक्षित नहीं समझा और स्थान-स्थान पर पाणिनि सूत्रों के प्रत्याख्यान के रूप में अपने बुद्धि-वैशद्य का परिचय दिया। वस्तुतः पतञ्जलि पाणिनि के पोषक ही रहे। महाभाष्य अष्टाध्यायी पर ही अक्षरशः आधारित रहा। उनका प्रमुख उद्देश्य पाणिनि की सरणि में पूर्णता को खोजना था। इसके साथ ही पतञ्जलि ने कात्यायन के मत की समीचीनता पर प्रसन्नता भी अभिव्यक्त की। वह इस निष्कर्ष पर पहुँचे कि कात्यायन के वार्तिक पाणिनि-सूत्रों के उद्घोषक हैं। वार्तिकों की व्याख्या के फलस्वरूप पतञ्जलि इस निष्कर्ष पर पहुँचे कि कात्यायन के कतिपय वार्तिकों को ही अनिवार्य माना जा सकता है। तथा शेष वार्तिक एक प्रकार से सूत्रों के पूरक मात्र हैं। उनके इस ऊहापोह ने दोनों आचार्यों की कृतियों में सत्यान्वेषण करने पर ही विश्राम लिया। इस नीर-क्षीर-विवेक से पतञ्जलि की साख और बढ़ी तथा पाणिनि, कात्यायन और पतञ्जलि द्वारा प्रतिपादित सिद्धान्तों में पतञ्जलि के सिद्धान्तों को सर्वाधिक मान्यता मिली-**यथोत्तरं मुनीनां प्रामाण्यं** इन विशेषताओं ने पतञ्जलि के महाभाष्य को अपूर्व कृति बना दिया। यद्यपि पतञ्जलि से पूर्व भी व्याडि, कुणि, प्रभृति आचार्यों के अनेक व्याख्या ग्रन्थ बन चुके थे, किन्तु 'शब्दानुशासन' के क्षेत्र में केवल पतञ्जलि के महाभाष्य को ही चिरस्थायी मान्यता मिली।

महाभाष्य के प्रकाश में कात्यायन के वार्तिकों की विद्यमानता स्पष्ट हुई। वार्तिकों का क्रमानुसार पाठ प्राप्त नहीं रहा। पतञ्जलि के व्याख्यान के साथ ही वार्तिक इङ्गित हो सके। उनमें भी कुछ तो स्वतंत्र रूप में मान्य हुए तथा शेष इष्टियों के रूप में स्वीकार किये गए। भाष्य का आकलन करने के साथ 'काशिका' आदि वृत्ति ग्रन्थों में सूत्रानुसारी वार्तिकों का यथास्थान समावेश हुआ।

पतञ्जलि का समय इतिहास के विद्वानों के अनुसार पुष्यमित्र का राज्यकाल है। महाभाष्य में प्रयुक्त–**'इह पुष्यमित्रं याजयामः' 'पुष्यमित्रो यजते'** तथा **'अरूणद् यवनः साकेतम्' 'अरूणद यवनः मध्यमिकाम्'**–इन वाक्यों के आधार पर पतञ्जलि को पुष्यमित्र

का समकालिक माना है तथा मिनेंडर (मिलिन्द) के साकेत तथा मध्यमिका नगरी पर हुए आक्रमणों का भी लेखा जोखा प्राप्त होता है। तदनन्तर ऐतिहासिक घटनाओं पर आधारित शब्द शास्त्र का विस्तार समझने में प्रामाणिकता सिद्ध होती है।

## सूत्रानुसारी व्याख्या ग्रन्थ (वृत्तिग्रन्थ)

त्रिमुनि के पश्चात् पाणिनि शाखा के वैयाकरणों को दो कोटियों में रखा जा सकता है–१. एक तो वे जिन्होंने पाणिनि की अष्टाध्यायी को उपजीव्य मानकर उनके सूत्र क्रमानुसार व्याख्यायें की। २. दूसरे वे जिन्होंने अष्टाध्यायी को उपजीव्य मानते हुए भी शिक्षण की सुविधा के विचार से (भाषा के व्यावहारिकता के विचार से) प्रकरणों में वर्गीकरण कर प्रक्रिया की दृष्टि से-सूत्र क्रम में अपेक्षित परिवर्तन किया। इनमें से प्रथमकोटि को अष्टाध्यायी परम्परा कहना उचित होगा तथा दूसरी को प्रक्रियानुसारी परम्परा।

उपर्युक्त दोनों प्रकार की व्याख्याओं से प्रथम सूत्रक्रमानुसार व्याख्या ग्रन्थों में 'काशिका' सर्वप्रमुख मानी गई है। काशी में रचे जाने के कारण इसका नाम काशिका पड़ा। इसके रचयिता दो विद्वान् **वामन** तथा **जयादित्य** रहे। इनमें से प्रथम पाँच अध्याय तो जयादित्य द्वारा विरचित हैं तथा शेष तीन अध्याय वामन द्वारा विरचित हैं। चीनी यात्री इत्सिंग ने अपने यात्रा विवरण (वि.सं. ७१६-७२२) में इस ग्रन्थ की प्रसिद्धि का उल्लेख किया है। विद्वानों की सम्मति में जयादित्य की अपेक्षा वामन का लेख अधिक प्रौढ़ है। इत्सिंग के अनुसार वि.सं. ७१८ में जयादित्य की मृत्यु हो चुकी थी। काशिका में प्रत्येक पाणिनि सूत्र की व्याख्या की गई है। दूसरी विशेषता यह है कि काशिका-वृत्ति में महाभाष्य के मत से भिन्न आचार्यों के मत भी व्यक्त किये गए हैं। सबसे मुख्य बात तो यह है कि वार्तिकों का पूरा स्वरूप 'काशिका' में ही उपलब्ध होता है। इसके अतिरिक्त दूसरी विशेषता यह है कि काशिका में अपेक्षित गण पाठ भी सूत्र की वृत्ति के साथ-साथ दिया गया है। काशिका में ऐसे अनेक ग्रन्थों का उल्लेख किया गया है, जो आज अप्राप्य हैं। ऐसा विदित होता है कि काशिकाकारों के समय तक उन ग्रन्थों का अध्ययन अवश्य होता रहा होगा। काशिका का मुख्य उद्देश्य पाणिनि की प्रक्रिया को सिद्ध करना है। इसीलिए आवश्यकतानुसार अनेक वार्तिकों को पाणिनि की इच्छा का अभिव्यञ्जक मानकर 'इष्टियों' के रूप में पढ़ दिया है। कहीं-कहीं काशिकाकार ने वार्तिकों की मूल भाषा में परिवर्तन भी किया है। उसका कारण यह है कि उन्होंने वार्तिकों को भी संक्षेप के साथ भाष्यात्मक अभिव्यक्ति के रूप में सामान्य चर्चा का अङ्ग बना लिया है। इस कारण बहुत से वार्तिक छूट भी गए हैं।

इस ग्रन्थ पर लिखी गई टीकाओं में से **आचार्य जिनेन्द्र बुद्धि** कृत 'न्यास' तथा **हरदत्त** द्वारा लिखित 'पदमञ्जरी' अधिक प्रसिद्ध हैं। कैयट ने महाभाष्य की टीका (प्रदीप)

में न्यासकार का खण्डन किया है। कैयट का समय १०२५ ई. के आसपास माना गया है। बाणभट्ट ने भी 'कादम्बरी' में न्यास ग्रन्थ की ओर संकेत किया है। फलतः जिनेन्द्र बुद्धि का समय ६५० ई. के आसपास माना जा सकता है। 'न्यास' की अपेक्षा 'पदमञ्जरी' सामान्य अध्येता के लिए कम उपयोगी सिद्ध हुई है। इसका कारण उसमें पाण्डित्य-प्रदर्शन की प्रवृत्ति का होना है। इनके गुरु अपराजित थे। यह द्रविड़ देश के निवासी थे। कावेरी नदी के तटवर्ती किसी ग्राम में इनका निवास-स्थान रहा। कैयट का खण्डन-मण्डन करने के फलस्वरूप इनका अविर्भावकाल ११०० ई. के लगभग माना गया है। काशिका की इन दोनों टीकाओं पर भी अनेक टीकायें लिखी गई हैं।

काशिका के पश्चात् भी वृत्ति ग्रंथ लिखने की परम्परा बनी रही। इन वृत्ति ग्रन्थों में **भागवृत्ति** विशेष रूप से उल्लेखनीय है। पाणिनि ने लौकिक और वैदिक प्रयोगों का निर्वचन प्रसङ्गानुसार किया है। उन्होंने किसी प्रकार का भेद नहीं रखा, किन्तु आगे चलकर 'भागवृत्ति' नामक ग्रंथ में लौकिक तथा वैदिक सूत्रों का विभाजन किया गया तथा भागवृत्ति नाम की सार्थकता दिखाई गई। भागवृत्ति की रचना के पश्चाद्वर्ती वैयाकरणों ने भागवृत्ति के इस वैलक्षण्य से काशिका वृत्ति को पृथक् करने के लिए उसके लिए 'एक वृति शब्द का प्रयोग किया है। 'एकवृत्ति' का तात्पर्य यह हुआ कि एक तन्त्र से या एक क्रम से उभयविध सूत्रों का व्याख्यान प्रस्तुत करने वाली वृत्ति। 'एकवृत्ति' नाम का प्रयोग पुरुषोत्तम देव ने अपनी भाषा वृत्ति में किया है और उनके टीकाकार सृष्टिधर की व्याख्या से 'काशिका' के लिए 'एक वृत्ति' नामकरण का पूर्वोक्त वैशिष्टय भलीभाँति गम्य होता है। यद्यपि भागवृति उपलब्ध नहीं होती, फिर भी मीमांसक जी ने यत्र-तत्र बिखरे हुए अंशों को समाकलित कर उसका अस्तित्व सिद्ध किया है। विद्वानों ने भागवृत्ति का समय माघ तथा कैयट का मध्यवर्ती काल माना है। फलतः पण्डित बलदेव उपाध्याय जी ने इस वृत्ति का नवम शती के पूर्वार्ध में विरचित होना स्वीकार किया है। भागवृत्ति माहाभाष्य को ही अपना उपजीव्य मानती है। भागवृत्ति के अतिरिक्त पुरुषोत्तम देव (११५० ई. पूर्व) ने 'भाषावृत्ति' नामक ग्रन्थ लिखा। इसमें केवल लौकिक शब्दों की रचना पर ही प्रकाश डाला गया है। तीसरे ग्रन्थ दुर्घटवृत्ति में **शरणदेव** ने सामान्य रीति से अव्याख्येय तथा अपाणिनीय पदों की पाणिनि-सम्मत व्याख्या की है। इन ग्रन्थों के अतिरिक्त **भट्टोजि दीक्षित** का 'शब्दकौस्तुभ' भी वृत्तिग्रन्थों में समाख्यात है। इस बात की पुष्टि भट्टोजि दिक्षित ने सिद्धान्त कौमुदी में की है। उन्होंने कृदन्त के अन्त में स्वयं लिखा है कि सिद्धान्त कौमुदी लौकिक शब्दों का संक्षिप्त परिचय है। विस्तार तो शब्दकौस्तुभ में पूर्व ही दिखाया जा चुका है। शब्द कौस्तुभ सम्पूर्ण नहीं मिलता, केवल आरम्भ में ढाई अध्याय तथा चतुर्थ अध्याय ही उपलब्ध होते हैं। शब्दकौस्तुभ विशाल एवं विस्तृत वृत्तिग्रन्थ है। शब्दकौस्तुभ की शैली महाभाष्य के अनुसार विषय का प्रतिपादन करने के साथ ही आह्निकों के रूप में विभक्त है। शब्दकौस्तुभ

में विशेष रूप से प्राचीन आचार्यों के मतों का तुलनात्मक अनुशीलन प्रस्तुत किया गया है। भट्टोजि दीक्षित के अनन्तर तथा नागेश के पूर्ववर्ती महान् संस्कृतज्ञ पं. विश्वेश्वर पाण्डेय ने भी–'व्याकरण-सिद्धान्त-सुधानिधि' ग्रन्थ लिखकर वृत्तिग्रन्थों के इतिहास में प्रामाणिकता की मोहर लगा दी। पाण्डेय जी विविध शास्त्रों में पारङ्गत थे। अतः उनके इस ग्रन्थ में व्याकरण के अतिरिक्त न्याय, मीमांसा, वेदान्त आदि शास्त्रों के सिद्धान्तों का समीक्षात्मक सङ्गमन प्रतिबिम्बित है। जब तक इसके केवल तीन अध्याय ही प्रकाशित थे, किन्तु वर्तमान में समग्र ग्रन्थ उपलब्ध होने से इसका पूर्ण स्वरूप देखने को मिलता है। पं. नित्यानन्द पंत ने इस ग्रन्थ को 'आकर ग्रन्थ' की संज्ञा दी है। इसकी शैली महाभाष्य के समान व्याख्यात्मक है। पतञ्जलि के अनन्तर विश्वेश्वर पाण्डेय ने ही अपने समय तक के सब विद्वानों के मत-मतान्तरों के साथ सैद्धान्तिक समीक्षा की है।

## प्रक्रियानुसारी व्याख्या ग्रन्थ

अष्टध्यायी की रचना का मूल उद्देश्य शब्दों की सिद्धि के साथ व्याकरण का शास्त्रीय परिचय कराना भी था। इस कारण अष्टाध्यायी के सूत्रों का क्रम यथानुरूप न होकर परिवर्तित हुआ। इस कार्य को अग्रसर करने में सुप्रसिद्ध विद्वान् धर्मकीर्ति ने पहल की, इन्होंने अपने ग्रन्थ का नाम रूपावतार रखा। धर्म कीर्ति का समय १२ वीं शताब्दी का मध्यभाग माना गया है। यह भी बौद्ध थे। रूपावतार दो भागों में विभक्त है। पूर्वार्ध में सुबन्त तथा उत्तरार्ध में तिङन्त का वर्णन है। यह वर्णन वाक्य को दृष्टि-पथ मे रखकर युक्ति सङ्गत है। आगे चलकर इसी उद्देश्य और विधेयगत वाक्यानुसारी प्रक्रिया का सभी प्रक्रिया ग्रन्थों में विधान स्वीकार किया गया है। इस ग्रन्थ में अष्टध्यायी के २६६४ सूत्र संकलित किए गये हैं। वैदिक प्रक्रिया को छोड़ दिया गया है।

तद्नन्तर इस दिशा में **विमल सरस्वती** की **'रूपमाला'** का नाम उल्लेखनीय है। इनका समय १३५० ई. माना गया है। रूपमाला की शैली तथा कौमुदी ग्रन्थों की शैली में समानता है। तदनन्तर शब्द रूपों और धातुरूपों का विवेचन विशेष रूप से किया गया है।

वाक्यानुगत प्रक्रिया शैली को विस्तृत करने में रामचन्द्राचार्य (१३७५ ई.) का नाम विशेष रूप से उल्लेखनीय है। इन्होंने 'प्रक्रिया कौमुदी' ग्रन्थ लिखकर ख्याति प्राप्त की। इस ग्रन्थ का प्रमुख उद्देश्य सरल तथा सुबोध शैली में प्रक्रिया का ज्ञान करना है। इस ग्रन्थ की व्याख्याओं में इनके पौत्र विट्ठल द्वारा रचित 'प्रसाद' प्रमुख है। इसके अतिरिक्त शेषकृष्ण का 'प्रक्रिया प्रकाश' (१५०० ई.) भी इस संन्दर्भ में उल्लेखनीय है। प्रक्रिया कौमुदी दो भागों में विभक्त है। इसके पूवार्ध में सुबन्थ तथा उत्तरार्ध में तिङन्त विवरण है। रूपों की सिद्धि के लिए प्रत्येक प्रकरण में उपादेय सूत्रों को समाकलित कर, लघुवृत्ति के साथ उचित दृष्टान्त भी दिये गए हैं। वैदिक प्रक्रिया छोड़ दी गई है। ग्रन्थ में २४७० पाणिनीय सूत्र

सङ्कलित हैं। इसी ग्रन्थ से प्रेरणा प्राप्त कर भट्टोजिदीक्षित ने 'सिद्धान्त कौमुदी' की रचना की। प्रक्रिया कौमुदी की दूसरी विशेषता यह है कि रामचन्द्र ने १०० से अधिक अपाणिनीय शब्दों की सप्रमाण निष्पत्ति की है। रामचन्द्र को लोक व्यवहार की दृष्टि से मुनित्रय के अतिरिक्त कातन्त्र आदि वैयाकरणों की प्रामाणिकता मान्य है। इस क्रम में निरन्तर ग्रन्थ रचना होती रही। धर्मकीर्ति के लगभग तीन सौ से अधिक वर्ष बाद भट्टोजि दीक्षित की 'सिद्धान्त कौमुदी' के प्रकाशन ने अष्टाध्यायी की समग्रता को निखार दिया। उनका आविर्भाव लगभग १५६० से १६१० ई. के मध्य माना गया है। बंगाल की हस्तलिखित पुस्तकों के सूचीपत्र में म.म. पं. हर प्रसाद शास्त्री ने इनके शब्दकौस्तुभ के १६३३ ई. में लिखे हुए एक हस्त लेख का उल्लेख किया है। फलतः दीक्षित का काल इनसे पूर्व होना चाहिए। मूलतः वह दक्षिण के निवासी थे, किन्तु काशी में आकर रहने के कारण उनकी प्रसिद्धि काशी निवासी के रूप में ही हुई। उनका पूरा परिवार विद्या सम्पन्न था। उनके कुल को व्याकरण शास्त्र के पारङ्गत विद्वानों को जन्म देने का सौभाग्य प्राप्त है। उनके पिता **लक्ष्मीधर** भ्राता **रङ्गोजी भट्ट** पुत्र **भानु दीक्षित** (रामाश्रम), भ्रातुष्पुत्र **कौण्ड भट्ट** तथा पौत्र **हरिदीक्षित** थे। उन्होंने अपने गुरु **शेषकृष्ण** से व्याकरण और धर्मशास्त्र का अध्ययन किया। वेदान्त और मीमांसा का अध्ययन क्रमशः **नृसिंहाश्रम** तथा **अप्पय्य दीक्षित** से किया। इनके द्वारा विरचित प्रसिद्ध ग्रन्थ यह हैं-१. शब्दकौस्तुभ, २. सिद्धान्त कौमुदी, ३. प्रौढ़ मनोरमा, ४. वैयाकरणभूषण कारिका, ५. तत्त्वकौस्तुभ, ६. त्रिस्थली सेतु, ७. तिथि निर्णय, ८. प्रवर निर्णय तथा ९. चतुर्विंशतिमत व्याख्या। इन ग्रन्थों के अतिरिक्त उन्होंने अन्य ग्रन्थों की भी रचना की। उनका सुपसिद्ध ग्रन्थ 'सिद्धान्त कौमुदी' प्रक्रिया शैली को प्राप्त कराने वाला अध्यवसाय है। भाषा की दृष्टि से वाक्य को अभिलक्षित कर तदनुसार ही इन्होंने अपने इस ग्रन्थ को पूर्वार्ध और उत्तरार्ध में विभक्त किया है। इसके अतिरिक्त अन्तिम दो प्रकरणों-वैदिक प्रकरण और स्वर प्रकरण-में वैदिक प्रयोग सम्बन्धी तथा वेदों में प्रयुक्त स्वर सम्बन्धी विशेषताओं का निदर्शन किया गया है। इन अन्तिम दोनों प्रकरणों में वैदिक प्रक्रिया तो अष्टाध्यायी के अध्ययनानुकूल संकलित है। परन्तु स्वर प्रक्रिया में यह नियम सर्वांशतः समाकलित नहीं है। इस प्रकार दीक्षित ने **लौकिक** और **वैदिक**-दोनों प्रकार के शब्दों की सिद्धि का अन्वाख्यान कर प्रक्रिया-शैली को पूर्णता के शिखर तक पहुँचा दिया। यदि दीक्षित वैदिक अन्वाख्यान से उदासीन रहते तो उनकी 'सिद्धान्त कौमुदी' भी पूर्ववर्ती अन्य प्रक्रिया ग्रन्थों की तरह एकाङ्गी ही रहती। इस प्रकार सिद्धान्त कौमुदी में अष्टाध्यायी के ३९७८ सूत्र व्याख्यात हैं। इस प्रकार सम्पूर्ण अष्टाध्यायी का प्रतिनिधित्व करने से इसकी लोकप्रियता बढ़ी। यही ग्रन्थ प्रक्रियानुसारी व्याख्यान का प्रतिनिधिस्वरूप स्वीकृत हुआ। अतः तब से आज तक इसका अध्ययन-अध्यापन अबाध गति से होता चला आ रहा है। दीक्षित ने 'सिद्धान्त कौमुदी' में सूत्रों की वृत्तियाँ अधिकतर 'काशिका' के

